**About the editor**

**Sri P. Ramanujan,** has edited this work referring to older print versions and has taken pains to bring the book to its present highly readable form. He not only wrote the entire manuscript, twice legibly for computerised typing-cum-photo typesetting process but also critically edited the typed version to rid it of errors.

He has also enriched the book with his scholarly introduction in Sanskrit **'Nivedika'** He is the son of Late **Sri Sohattur Parankushachar,** an illustrious scholar and authority in Krishna yajur-veda, under whose feet he has learnt Divya Prabandhams & krishna yajur veda. He also has deep insight in vishistadvaita vedanta. A disciple of the 44th Swami of Sri Ahobila Mutt, Sri Satakopa Sri Vedanta Desika Yatindra Maha Desika, Ramanujan is an engineer by profession in HAL, Bangalore.

तर्क व्याकरण मीमांसा वेदान्तालङ्कारादि

सर्वशास्त्र पारङ्गतैः श्लेषयमक चक्रवर्त्यादि

बिरुदाङ्कितानां रघुनाथाचार्याणां तनयैः

सीताम्बा गर्भसम्भवैः श्रीमत्काञ्ची नगर वास्तव्यैः

वेङ्कटयज्वभिः (वेङ्कटाध्वरी) विरचितं

# लक्ष्मी सहस्रम्

शोकहर्तृपुराभिजन श्रीरामानुजदासेन

प्राचीनकोशानुसारेण संशोध्य परिष्कृत्य

स्वीयया निवेदिकया सह

प्रभव संवत्सरस्य वृश्चिकमासि

कल्याण नगरे मुद्रितं विजयतेतरां

ಸಿಹಿ ನೆನಪಿನೊಂದಿಗೆ
ವಿಶ್ವಾಸಪೂರ್ವಕ ಉಡುಗೊರೆ
ತಿರುದಾಸ:

श्री अहोबिल मठम्

श्रीरङ्गम्

**श्रीमद्वेदमार्ग प्रतिष्ठापनाचार्य, परमहंसपरिव्राजकाचार्य,**

**सर्वतन्त्र स्वतन्त्रोभय वेदान्ताचार्य, श्री भगवद्रामानुज सिद्धान्त निर्धारण सार्वभौम,**

**श्री वण्शठकोप श्री वेदान्त देशिक यतीन्द्र महादेशिकानां**

**मङ्गलाशासन श्रीमुखम्**

।। श्रीमते श्रीलक्ष्मीनृसिंह परब्रह्मणे नमः ।।

श्रीमते श्रीवण्शठकोप श्री वीरराघव शठकोप यतीन्द्र महादेशिकाय नमः ।।

कल्याणपुरी विराजमान "श्री रामानुज सेवा ट्रस्ट्" द्वारा श्री वेङ्कटाध्वरि महाकवि प्रणीतः लक्ष्मीस ग्रन्थः प्रकाश्यत इति ज्ञात्वा भृशं तुष्यामः । वेङ्कटाध्वरि कवेः अलङ्कारादि विविध शास्त्र पारीण सर्वेषां सुविदितमेव । ग्रन्थोऽयं अभीष्ट सर्वफलप्रदः इति सर्वैः पापठ्यते । तत्सौकर्याय ग्रन्थस्यास्य सम्यङ् मुद्रणं आवश्यकं भवतीति एतेषां प्रयत्नः सार्थ एव भवेदिति निश्चिनुमः । सर्वेऽपीमं ग्र क्रीत्वा तदुपयुज्य च एतेषां प्रयत्नं सफलयन्त्विति आशास्महे । प्रकाशनं चास्य वरिष्ठ गुणविभूषि पराशरेण अस्मच्छात्र वर्येण भवतीति अस्माकं प्रमोदस्थानम् । अस्य मुद्रण, प्रकाशन, क्रय, पठन कर्तृणां श्रीमालोलः सर्वतोमुखानि श्रेयांसि अनारतं आदधात्विति च आशास्महे ।

दिश्यासुः दीर्घमायुः धनमपरिमितं देहपुष्टिं वरिष्ठां
पुत्रान् मित्राणि दारान् अखिल सुखयुतान् आधिपत्यं च भूमेः।
उद्यन्मार्तण्ड रोचिः परिचय विकसत्पुण्डरीक प्रबुद्धाः
श्रीमल्लक्ष्मी नृसिंह प्रसृमर करुणा पूरपूर्णाः कटाक्षाः ।।

श्री शठकोप श्रीः



# LAKSHMI SAHASRAM

By

VENKATADHWARI

SRI RAMANUJA SEVA TRUST
1241, "SREE CHARANA" II STAGE
RAJAJINAGAR BANGALORE 560 010
Phone: 35 05 82

# LAKSHMI SAHASRAM

*Edited by:* Vidwan. P. Ramanujan

*Published by:* Sri Ramanuja Seva Trust
1241, 'Sreecharana
II Stage, 4th Main, Rajajinagar
Bangalore - 560 010. Phone: 350582

FIRST EDITION 1988

FIRST PRINT 2,000 Copies



PRICE Rs. 30/=

*Photocomposed at:* XL-Fototypes, Rajajinagar,
Bangalore - 560 010. Phone: 358399

*Printed at:* Aparna Printers & Publishers Pvt. Ltd.,
Malleswaram, Bangalore - 560 055. Phone: 348142

# PUBLISHERS NOTE

SRI LAKSHMI SAHASRAM is a divine poem in praise of Godess Alarmelmanga, the presiding diety of Tiruchanur. It is composed by Athreya Venkatadhwari a Sanskrit poet of 16th Century.

Publication of rare books of cultural importance is one of the objectives of Sri Ramanuja Seva Trust. This is a maiden venture in publication of books. The Trust intends to bring out this publication without making any profit and the amount collected through the sales shall be utilised for carrying out several noble objectives of the Trust.

The Trust places on record the services of vidwan Sri. P. Ramanujan, a member of our advisory Committee for taking up the Editing Work.

The Trust Thanks M/s. Aparna Printers for printing the book neatly and well in time.

विषयसूची (contents)

अनन्याधीनकल्याणं अन्यमङ्गळकारकम्। जगन्निदानं अद्वन्द्वं द्वन्द्वं वन्दामहे वयम्।।

Lifting mankind from the quagmire and quicksand of repeated births is the lofty goal of vedic philosophy. The path for emancipation is clearly shown by Upanishads. A comprehensive knowledge of the Godhead (Brahman), means (upaya) and goal (purushartha) is a prerequisite for an individual yearning for emancipation before taking recourse to the appropriate means. Of these, a clear concept of the Godhead is of utmost importance. Lord Vishnu has been declared as the Godhead by Vedas

(अग्निर्वै देवानामवमो विष्णुः परमः। ऐतरेय ब्राह्मणम् 1-1) (अग्निरवमो देवतानां विष्णुः परमः। यजुर्वेदम् तैत्तरीय संहिता 5-5-1-4

Shri Adi Sankara, Shri Bhagawad Ramanuja and Shri Madhvacharya have echoed this view of the Vedas in their commentaries on Brahma-sutras, Upanishads and Bhagawad Gita. In this context, it is only appropriate to quote verbatim the following passage from the commentary of Shri Appaiah Dikshitar on Ananda-lahiri:

वेदविभागार्थमिवावतीर्णेन सकलवेदतात्पर्या- भिज्ञेन सर्वज्ञशिरोमणिना वेदव्यासेन पुलस्त्यवरदानलब्धदेवतापारमार्थ्यविदनेन श्रीपराशरेण अन्यैश्च महर्षिभिः वेदोपबृह्मणार्थं प्रणीतेषु श्रीमहाभारत- विष्णुपुराणादिषु निश्चितपरब्रह्म भावस्य सद्भिः सर्वैरप्यविभागेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित्कोणे निविष्टमन्त्रार्थवाद- पुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते। तथा चेत् मूर्धा च शतधा भवति। वेदवैदिकद्रोहो देवताद्रोहश्च जायते। अतो नारायणः परब्रह्मकोटिरेवे- त्यस्माकं सिद्धान्तः।।

## SRI LAKSHMI IN THE VEDANTIC PERSPECTIVE

अनन्याधीनकल्याणं अन्यमङ्गळकारकम्। जगन्निदानं अद्वन्द्वं द्वन्द्वं वन्दामहे वयम्।।

Lifting mankind from the quagmire and quicksand of repeated births is the lofty goal of vedic philosophy. The path for emancipation is clearly shown by Upanishads. A comprehensive knowledge of the Godhead (Brahman), means (upaya) and goal (purushartha) is a prerequisite for an individual yearning for emancipation before taking recourse to the appropriate means. Of these, a clear concept of the Godhead is of utmost importance. Lord Vishnu has been declared as the Godhead by Vedas

(अग्निर्वै देवानामवमो विष्णुः परमः। ऐतरेय ब्राह्मणम् 1-1) (अग्निरवमो देवतानां विष्णुः परमः। यजुर्वेदम् तैत्तरीय संहिता 5-5-1-4

Shri Adi Sankara, Shri Bhagawad Ramanuja and Shri Madhvacharya have echoed this view of the Vedas in their commentaries on Brahma-sutras, Upanishads and Bhagawad Gita. In this context, it is only appropriate to quote verbatim the following passage from the commentary of Shri Appaiah Dikshitar on Ananda-lahiri:

वेदविभागार्थमिवावतीर्णेन सकलवेदतात्पर्या- भिज्ञेन सर्वज्ञशिरोमणिना वेदव्यासेन पुलस्त्यवरदानलब्धदेवतापारमार्थ्यविदनेन श्रीपराशरेण अन्यैश्च महर्षिभिः वेदोपबृह्मणार्थं प्रणीतेषु श्रीमहाभारत- विष्णुपुराणादिषु निश्चितपरब्रह्म भावस्य सद्भिः सर्वैरप्यविभागेन परब्रह्मेत्येव पूजितस्य श्रीनारायणस्य क्वचित्कोणे निविष्टमन्त्रार्थवाद- पुराणवचनादिलेशमवलम्ब्य जीवभावं वक्तुं नास्मज्जिह्वा प्रवर्तते। तथा चेत् मूर्धा च शतधा भवति। वेदवैदिकद्रोहो देवताद्रोहश्च जायते। अतो नारायणः परब्रह्मकोटिरेवे- त्यस्माकं सिद्धान्तः।।

(स ह्रोवाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्यात् य एतां मायां शक्तिं वेद स पाप्मानं तरति स संसारं तरति सोऽमृतत्वं च गच्छति। नृसिम्हपूर्वतापनीयोपनिषत् 3-3-11)

एषैव जगतामिच्छा ज्ञानमेषा परावरा।
एषैव सृजते काले सैषा पाति जगत्त्रयम्।।
जगत्संहरते चान्ते तत्तत्कारणसंस्थिता।
मातरं जगतामेतामनाराध्य महत्कुतः।।
पाञ्चरात्रं लक्ष्मीतन्त्रम् 1-39 & 40

**as immanent, She is omnipresent by essential nature (swaroopa) like Lord Vishnu**

(राडसि बृहती श्रीरसि इन्द्रपत्नी धर्मपत्नी। यजुर्वेदम् काठकम् 2-20)

**as the eternal companion of Lord Vishnu, She manifests Herself Suo moto in several forms matching the manifestations of Lord Vishnu as, for instance, Sri Sita for Sri rama, Sri Rukmini for Sri Krishna and so on**

राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि।
अन्येषु चावतारेषु विष्णोरेषानपायिनी।। देवत्वे देवदेहेयं
मनुष्यत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषा-
त्मनस्तनुम्।। विष्णुपुराणम् 1-9-144 & 145)

**as emancipator, apart from pleading with the Lord on behalf of a devotee seeking release from births, She confers along with Lord Vishnu the highest benediction of moksha**

(सा नो लोकममृतं दधातु। यजुर्वेदम् काठकम् 3-12)

**and, as Godhead, She is the Mother of the universe vis-a-vis Lorc Vishnu, the father of the universe**

त्वं माता सर्वलोकानां देवदेवो हरिः पिता। त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्।
विष्णुपुराणम् 1-9-126

(स होवाच प्रजापतिर्माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्यात् य एतां मायां शक्तिं वेद स पाप्मानं तरति स संसारं तरति सोऽमृतत्वं च गच्छति। नृसिम्हपूर्वतापनीयोपनिषत् 3-3-11)

एषैव जगतामिच्छा ज्ञानमेषा परावरा।
एषैव सृजते काले सैषा पाति जगत्त्रयम्।।
जगत्संहरते चान्ते तत्तत्कारणसंस्थिता।
मातरं जगतामेतामनाराध्य महत्कुतः।।
पाञ्चरात्रं लक्ष्मीतन्त्रम् 1-39 & 40

**as immanent, She is omnipresent by essential nature (swaroopa) like Lord Vishnu**

(राडसि बृहती श्रीरसि इन्द्रपत्नी धर्मपत्नी। यजुर्वेदम् काठकम् 2-20)

**as the eternal companion of Lord Vishnu, She manifests Herself Suo moto in several forms matching the manifestations of Lord Vishnu as, for instance, Sri Sita for Sri rama, Sri Rukmini for Sri Krishna and so on**

राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि।
अन्येषु चावतारेषु विष्णोरेषानपायिनी।। देवत्वे देवदेहेयं
मनुष्यत्वे च मानुषी। विष्णोर्देहानुरूपां वै करोत्येषा-
त्मनस्तनुम्।। विष्णुपुराणम् 1-9-144 & 145)

**as emancipator, apart from pleading with the Lord on behalf of a devotee seeking release from births, She confers along with Lord Vishnu the highest benediction of moksha**

(सा नो लोकममृतं दधातु। यजुर्वेदम् काठकम् 3-12)

**and, as Godhead, She is the Mother of the universe vis-a-vis Lorc Vishnu, the father of the universe**

त्वं माता सर्वलोकानां देवदेवो हरिः पिता। त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम्।
विष्णुपुराणम् 1-9-126

**Sri Lakshmi-sahasram has remained unpublished for several decades. In the South, it was published in Grantha script with the commentary (in Samskrit) of Shri Vijayaraghava Patrachariar. Ratna-prakasika, another commentary in Sanskrit by the late Shri Krishna Brahmatantra Swatantra Swamy, the 31st pontiff and head of Shri Parakala Math at Mysore, who was himself a gifted poet and great scholar in Samskrit Vyakarana Alankara and Vedanta as is evident from his sixty odd works, is yet to see light. In the North, this poem was published long ago with two commentaries, different from those mentioned above. None of these publications is available now. Hence, Sri Ramanuja Seva Trust at Bangalore has taken the lead in bringing out the bare text of the poem.**

**In so far as the very second verse of this poem is concerned, there is a variation in the text on a comparison of the southern and northern editions. In the southern edition with the commentary of Shri Vijayaraghava Patrachariar, the text of this verse reads as under:**

असदृशमरुणाब्जदृशं प्रस्विन्नपयोधरस्फुरन्मूर्तिम्।
मनसि दधीमहि सततं मातारं मातरञ्च लोकानां।।

**In the northern edition, this verse reads as under:**

असदृशमरुणाब्जदृशं प्रस्विन्नपयोधरस्फुरन्मूर्तिम्।
मनसि दधीमहि सततं लोकानां मातरञ्च पितरञ्च।।

The portions in these two texts, which are at variance with each other, have been underlined. In this publication, the text as seen in the southern edition has been adopted in view of the dual significance it carries. Firstly, the poet had an inordinate love for the use of pun and alliteration to the extent that, as held out by the legend, he had once proclaimed that, even if his 'swasa' (breath) would stop, his 'prasa' (alliteration) would not. Mark the alliteration even in these words. In this text, the presence of these two figures of speech is very much evident. The two words मातारं and

मातरं spring from one and the same root मातृ by virture of rule 2.95 in Unadi Sutra (a work on Samskrit Grammar). Secondly, these two derivations have philosophical significance in this verse. The first in masculine gender refers to Lord Vishnu as one who measured the entire universe in His manifestation as Lord Trivikrama. This feat of the Lord, which is eulogised in Vedas, exhibits His quality of immanence. The second in the feminine gender refers to Goddess Sri Lakshmi as the Mother and cause of the universe. The importance in the use of these words with reference to the Divine Couple has been explained in detail by Shri.P.Ramanujan, a pandit by himself and son of a great pandit (late) Shri Parankusachariar Swamy, in his elaborate introduction in Samskrit to this publication. Shri R. Keshava Ayyangar, Senior Supreme Court Advocate and an eminent scholar in Samskrit, Tamil and English at Madras, has relied on the southern version for explaining the term माता in 'Matanubhangi', one of the names of Tiruvalluvar in his classic treatise in Tamil on Tirukural known as 'Valluvarullam'. Prof. N.T.Srinivasa Iyengar, an eminent scholar in Samskrit at Bangalore, when consulted, had no hesitation in upholding the authenticity of the southern version. It is for these reasons that the text of this verse as seen in the publication with Shri Patrachariar's commentary has been faithfully adopted in this publication.

Shri Atreya Venkatadhwari, a descendent of the great Shri Kadambi Achan, who was Personal assistant to Shri Bhagawad Ramanujar, was born at Arasanipalai (near Kanchipuram) in 1590 AD and lived up to 1660 AD. Besides, Sri Lakshmi-sahasram, he is said to have composed a hundred odd works many of which have, unfortunately, been lost. A list of his works now available is given below:

**KAVYAS**

**Viswa-guna-adarsa champoo**
**Varadabhyudaya champoo**
**Srinivasavilasa champoo**
**Uttara champoo**
**Sravananandam**

**MEEMAMSA WORKS**

**Vidhitraya paritranam**
**Meemamsa makarandam**
**Nyaya padman**

**NYAYA WORKS**

**Manisara**
**khandanam**

Pradyumnanandam
Raghava Yadaveeyam
Kanchibanam

STOTRAS
Acharya panchasat
Kamasikanrusimha stotram
Subhashita kaustubham

Vyutpitsubodham

VYAKARANA WORKS
Mahabhashya Spoorti
Yanglungta prakasika

VEDANTA WORKS
Nayadyumani deepika
Srivibhutva samarthanam
Yatiprativandana khandanam

Mahabhashya-spoorti is said to be an elaborate work on Patanjali's Mahabhashya, which is yet to be published. Raghava-Yadaveeyam is a short poem which, when read in the normal order, portrays the deeds of Lord Sri Rama but, when read in the reverse order, portrays the deeds of Lord Sri Krishna. This kind of composition is said to be unique. LIFCO, the renowned publisher of religious works at Madras, had published this work long ago with a translation in Tamil. This is also out of print now. Sravananandam is a poem of 1000 odd verses in praise of Lord Vishnu as Deities at various shrines and is, otherwise, known as Sri vishnu-sahasram. viswa-guna-adarsa-champoo is a very popular work. The list of works given above shows that he was a prolific writer in many faculties of Samskrit literature. The fact that he lived at the time of the advent of Britishers is evident from his reference to them while describing the city of Madras in Viswa-guna-adarsa-champoo.

In the wake of enquiries from many quarters regarding the availability of Sri Lakshmi-sahasram in view of its efficacy in restoring eyesight, Sri Ramanuja Seva Trust (Regd.) Bangalore has come forward to present this melodious poem in print to the yearning devotees. Bold and beautiful types have been used for printing the text in Nagari script, keeping the needs of those with poor vision in mind. The publication is so priced that there is not even an iota of profit for the institution bringing out this publication.

It is also significant to note that 500 of the 2000 copies are earmarked for either free distribution to those who deserve this service or at a concessional price to those who cannot afford to pay even this low price. However, this concession is subject to the condition that those who want to avail themselves of this service should be ailing from loss of eyesight -total, acute or partial -and that too only if they are eager to use this poem for regaining their eyesight through recitation. However, those who cannot read the text themselves, the recitation could be entrusted to another person.

It is our profound conviction that this publication would be heartily welcomed by devotees. Lack of funds forced us to abandon our sincere wish to publish this work with a brief commentary. May the Divine Couple bless us to realise this ambition!

In the invocatory verse (quoted at the beginning) in Sri Lakshmi-kalyanam (a defunct work) which as a play composed by Swamy Parasara Bhatter is evident from works of Swamy Vedanta Desikan, the acharya extols the Divine Couple as those whose auspiciousness does not depend on others, who confer all auspiciousness on others and who are together the cause of universe. Before withdrawing the pen, let me pray for the welfare of the devotees by quoting the benedictory verse from the same play (Sri Lakshmi-kalyanam) of Swamy Bhattar (which has been cited by Sridhara Dasa in his 'Sadukti-karnamritam'):

कचकुचचिबुकाग्रे पाणिषु व्यापृतेषु
प्रथमजलधिकन्यासङ्गमे रङ्गभर्तुः।
ग्रथितनिबिडनीविग्रन्थिविस्रंसनेच्छोः
चतुरधिकभुजाशा शार्ङ्गिणो वः पुनातु।।

(K NARAYANAN)

# भूमिका

श्रीः

अशेषचिदचिद्योगं अशेषार्थ प्रसाधकं। द्वन्द्वं वन्दामहे नित्यं लक्ष्मीनारायणाभिधं।।

श्रीमत्याः महालक्ष्म्याः स्वरूप रूप गुणाविभवैश्वर्य शीलाद्यनवधिकातिशयासङ्ख्येय कल्याणगुणगणावबोधीनि स्तोत्राणि बहूनि सन्ति। तानि चेमानि, श्रीसूक्तं, अष्टोत्तर शत नामावलि स्तोत्रं, वलद्वेषिकृत विष्णुपुराणोक्त स्तोत्रं, कनकधारा स्तोत्रं, यामुनाचार्यकृत लक्ष्मीचतुःश्लोकी, लक्ष्मीप्रपदनरूप श्रीरामानुजकृतस्तोत्रं, श्रीस्तवः, श्रीगुणरत्नकोशः, श्रीस्तुतिः इत्येवं नामकानि। एतेषु शब्दतः अर्थतश्च विवक्षितार्थप्रतिपादकरूपं बहुशः विस्तृतं ''लक्ष्मीसहस्रा'' भिधं स्तोत्रं तर्क, व्याकरण, मीमांसा, वेदान्तालङ्कार शास्त्रादि पारङ्गतेन अरशाणिपालै वेङ्कटाध्वरि महाकविना विरचितं निखिल विद्वत्पामर बहुमतं जगति सुप्रसिद्धविभवं चकास्ति।

एतत्प्रबन्धारश्च न केवलं कवयः, अभ्यस्तनिखिलतन्त्राः पण्डितप्रकाण्डाः भगवत्प्रसाद लब्धवरकवयश्च व्यलसन्। सर्वेष्वपि शास्त्रेषु कूलङ्कष पण्डितानां अलङ्कारादि शास्त्रेषु वैदुष्य भाजां श्रीरघुनाथ सूरीणां पितॄणां सकाश एव अधिगतसर्वशास्त्र पाण्डित्या एते।

कृशानु विश्वावसु मुखेन विश्वपरिस्थितिं प्रकटयन्तः एते दौर्भाग्यवशात् आन्ध्यं प्राप्ता अपि, निग्रहकरणे एव भगदनुमतिमपेक्षमाणायाः अनुग्रहरचनायां अनपेक्षितभगवदनुमतेः जगन्मातुः अज्ञातनिग्रहायाः महालक्ष्म्याः सहस्राधिक स्तोत्ररूपैतत्प्रबन्धकरणेन सुदृष्टयोभवन्निति कथां शृण्वन् न कोपि अस्य वरकवित्वं सन्देग्धि। ''श्रियं लोके देवजुष्टामुदारां'' इत्युक्तरीत्यादिवा

श्रीशङ्कर भगवत्पादाः स्वकृतकनकधारास्तोत्रेणान्वर्थयन्। सर्वतन्त्रस्वतन्त्राः श्रीवेङ्कट नाथार्या अप्यमुमतिशयं, ''धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूना'' मित्यनेन सुनिपुणं ब्रह्मचारि विषये सार्थयामासुः।

आर्द्रापराधिनि काके जानक्युदन्तं प्रकाशयत ''राघवस्य हृदयं स्थिराघवद्वायसं प्रति न वायसक्रमं। देवि जानकि दयारसात्त्वया पादयोजनकृता द्रवीकृतं'' इति श्लोकरत्नं पठन्तः एतान् कविवरान् न न प्रशंसेयुः ॥

''भो भूपभूमौ भ्रम भीम पाप भूमेति मे मूर्ध्नि लिपिं विधातुः। पवर्गगर्भां परिमृज्य मातः दिशस्यपाङ्गैः अपवर्गगर्भां'' इति रसवत्तरं विचित्रनिबन्धनं श्लोकं पठन्तः श्री भट्टार्यसरणिं अनुसरन्त्येते इति निश्चप्रचं वदेयुः।

''जननि महति वंशे जन्म लब्धं ततः किं? विशदमवगते वा वेदशास्त्रे ततः किं?। सदसि कथकदर्पस्सादितो वा ततः किं? भवजलधितरिस्त्वं भाविता चेन्नचित्ते'' इतीदं पद्यरत्नं श्रीशङ्कराचार्यकृतं निर्वेदमालिकास्तोत्रमेवानुसरति।

अतिगभीरं विद्वन्मनोज्ञं सार्थपुष्टि सकलमङ्गलावहं इदं लक्ष्मीसहस्रं सर्वेप्सितसिद्धये नित्यपारायणोपयुक्तं भवितुं एतन्महाकाव्यस्य अवश्यं कार्यं मुद्रणमिति महामनस्विनः एते एतन्मुद्रणव्यापारे प्रावर्तन्त। एतच्च महाकार्यं विनैव विघ्नं सुशीघ्रमेव हस्तापचेयफलं श्रीमालोलस्यै धमानानुग्रहेण भवत्विति तामेवाशरण्य शरण्यां अखिलजगन्मातरमभ्यर्थये॥

कल्याणपुरी,<br>प्रभवकटककृष्णपञ्चमी<br>( 30.7.87)

विद्वान्, चक्रवर्त्याचार्यः<br>श्रीमत्अहोबिलमठं आस्थानविद्वान्,<br>ब्रह्मविद्यावाचस्पतिः, न्यायवेदान्तशिरोमणिः

श्रीः

श्रीमते लक्ष्मीहयवदन परब्रह्मणे नमः
श्रीमते श्रीवणशठकोप श्री वेदान्तदेशिक यतीन्द्र महादेशिकाय नमः

## निवेदिका

श्रुत्युक्तविभवां विभ्वीं देवदेवीं श्रये श्रियं। वाचं श्रद्धां तथा मेधां दत्तात्सा मे तथाविधा ।।
लक्ष्मीसहस्र नामेदं वेङ्कटाध्वरिणा कृतं। संमुद्र स्तुतिरत्नं यत् सुप्रकाश निनीषया ।।
किञ्चित्प्रास्ताविकत्वेन तदौन्नत्यं निवेद्यते। लक्ष्मीतत्कान्ततद्भक्त तुष्ट्यै स्यादिदमंजसा ।।
क्वाहं अत्यलसो मन्दः क्व वा लक्ष्मीर्हरिप्रिया । तथापि तद्गुणान् वक्तुं उद्युञ्जे तत्कृपाबलात् ।।

अयि भोः प्रेक्षावन्तो महाजनाः!

सुविदितमेवेदं समेषां विद्वद्वराणां महाकवि वेङ्कटाध्वरिणः चरितं प्रथितानेकग्रन्थरचनञ्च। तेषां ग्रन्थेष्वन्यतमं अनुत्तमं वक्तृविषयवचनपाटवादिबहुमहिमशालि श्रुत्यर्थगर्भितं च चकास्तीदं लक्ष्मीसहस्रनामकं स्तोत्ररत्नं महालक्ष्म्याः समस्तकल्याणगुणगणप्रकाशकं। प्रथितं चेदं स्तोत्ररत्नं विधिवदधीतं (सुपठितं) सत् नेत्रपाटवाविष्कारीति। सन्ति च व्याख्याः ग्रन्थरत्नस्यास्य तात्पर्यवर्णनपराः। ईदृशविभवस्याप्यस्य महाग्रन्थस्य सर्वोपयुक्तं मुद्रितपुस्तकं दुर्लभं सञ्जातमिति दूयमानैः कैश्चिद्भक्ताग्रेसरैः बहुप्रयासपूर्वकमपि अस्य दौर्लभ्यापाकरणं सङ्कल्पितं भगवत्प्रसादेन महालक्ष्म्याः कटाक्षेण च इदानीं निर्वर्तित । एतस्मिन्नवसरे अस्य ग्रन्थस्य विषये किञ्चित् वक्तव्यमस्तीत्यपि आलोच्य काचिन्निवेदिका

अत्र संयोजिता। अत्र ग्रन्थकर्तृ विषयः, ग्रन्थ शैली, स्वरूपं तथा तत्र वर्तमानानां असंख्येयार्थरत्नानां श्रुत्युक्तविषयाणां दिङ्मात्रप्रदर्शनं च प्रचिकटिषितः।

महाग्रन्थस्यास्य कर्तारःश्री रघुनाथसूरि यज्वनः सकलशास्त्रपारीणस्य तनूभवाःश्री वेङ्कटाध्वरीति ग्रन्थकर्तृभिरेव निर्दिष्टाः(चित्र स्तबके, श्लो. 935,)। इमे च कवयः अधुनातः त्रिशतवर्षेभ्यः प्राक् काञ्चीनगर्याः समीपे दीपप्रकाश इति प्रसिद्ध अर्चामूर्तिमन्दिरानूपे लब्धजनिमन्तः अरिशाणफालनामक ग्रामीणाः इति च ज्ञायते। एषां पितृवर्याणां रघुनाथसूरीणां सर्वशास्त्र पारङ्गतत्वं विद्वन्मनोहारि श्लेषयमकादि क्लिष्ट अलङ्कारवैदुष्य प्रकाशकग्रन्थनिर्माणं च प्रथितमस्ति। एषां विषये, ''पञ्चमत भञ्जन निबन्धन विख्यात तातयज्व भागिनेयवाजपेयादि याज्यात्रेय वंश मौक्तिकीभवदप्पयार्य तनूभव श्लेषयमकचक्रवर्ति रघुनाथाचार्य तनयैः श्रीनिवासकृपातिशाय संविदितनयैः सीताम्बागर्भसम्भवैः श्रीमत्काञ्ची नगरवास्तव्यैः वेङ्कटयज्वभिः (वेङ्कटाध्वरी) विरचितं लक्ष्मी सहस्रं'' इति खरसंवत्सरस्य मीनमासि (1891) कुम्भघोणस्थ श्रीविद्याक्षर मुद्राशालायां मुद्रिते सव्याख्ये लक्ष्मीसहस्रपुस्तके दृश्यते। (एतच्च ग्रन्थलिपिस्थं पुस्तक मेवावलम्ब्य अत्र प्रकृतग्रन्थः मुद्रितः इत्यप्यवधेयं।) एते च कवयः दीपादुत्पन्नप्रदीपवत् कुले महति यज्वनां सञ्जाताः अत्याश्चर्यकरं मेधाविलासं अध्यतिष्ठन्निति नात्रकिञ्चिदतिशयविषयं। न च तिरोहितमेषां पाण्डित्यं न्याय, व्याकरण, मीमांसा, वेदान्त अलङ्कारादि शास्त्रेषु एतद्ग्रन्थाध्येतॄणां। एभिरेवोक्तं निजे सुप्रसिद्धे विश्वगुणादर्शनामके चम्पूग्रन्थे ''तर्कव्याकृतिमीमांसा तन्त्र वेदान्त चिन्तकः। व्यक्तं विश्वगुणादर्शं विधत्ते वेङ्कटाध्वरी'' इति। अस्मिन् ग्रन्थे विशिष्य एषां महालक्ष्म्याः श्रैष्ठ्यप्रतिपादने सर्वथा श्रुत्यर्थानुसारिता, दृढा भक्तिः. प्रतिपादनशैल्युत्कर्षः, लक्ष्म्याः गुणान् पुष्पवन्निरूप्य तान् स्तबकरूपेण संग्रथ्य तत्पदयोरर्पण मुखेन आविष्कृतं आदरातिशयं इत्यादि श्रीमतः वेदान्तदेशिकाचार्यान् कविकथकसिंहान् सर्वतन्त्र स्वतन्त्रान्

संस्मारयति। कवयश्चैते, 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ' इतिवत् वेदान्ताचार्येष्वत्यन्तं भक्तिनम्राः इत्यप्यत्रैव सुव्यक्तं। अन्यदपि वक्तुं शक्यते यत् अस्य ग्रन्थस्य वेदान्ताचार्याणां पादुकासहस्र साम्यमस्तीति। उभावपि ग्रन्थौ विषयवैलक्षण्य युक्तौ, दुरूह बहु श्रुत्यर्थगर्भितौ, कविगर्वनिर्वापकौ, सहस्रश्लोकयुक्तौ, बहु पद्धतिस्तबक विभक्तौ, [illegible], आबालगोपालं अ दरपठितौ, अथापि बहुचित्राद्यलङ्कारनिर्भरौ भगवदानन्दजननाविति सूपपादं। अन्यच्चैनयोस्सादृश्यं विस्मयावहं यत् उभावप्येतौ स्पर्धया ग्रथिताविति। वेदान्ताचार्यास्तु परमपुरुषप्रेयस्या अनुगृहीतं कवितार्किकसिंह बिरुदं स्वस्मिन् अननुरूपं मन्वानैः मत्सरिभिः कैश्चित् प्रेरितासन्तः श्रीरङ्गनाथपादुकावेव विषयीकृत्य अवलम्ब्य च रात्रावेकयाममिते समये अस्ताविषत असाविषत च ग्रन्थरत्नं पादुकासहस्र नामकं समस्तवै[illegible] भाग्यफलं।

अत्रैव प्रारम्भस्तबक त्रयोविंशपद्ये ग्रन्थकृतः वेदान्ताचार्याणां साक्षात् श्रीहयवदनापरावतारत्वात् पादुकासहस्रग्रथनं न कस्यचित् विस्मयावहं इति वचनमुखेन स्वस्य लक्ष्मीसहस्र ग्रथनं श्रीकटाक्षमात्रनिर्वर्त्यं विस्मयावहमेवेति स्वनैच्यमनुसन्दधते।

वेङ्कटाध्वरिकवयस्तु स्वीये विश्वगुणादर्शनामके चम्पूग्रन्थे परमात्मानं नैर्घृण्ययुक्तं कृशानुवाक्येनापि प्रत्यपीपदन्निति निग्रहेच्छायुतेन भगवता एषां चक्षुः इन्द्रिय पाटवे अपहृते तेनैव स्पर्धमानाः विश्वावसुवचसाविश्वसित भगवत्करुणाकरत्वप्रतीतियुक्ताः 'राघवाद्धि भयं घोरं राक्षसानामुपस्थितं' इतिवत् सर्वलोकशरण्ये सर्वभूताभयदे राघवे स्वापचारात्क्रुद्धे सति 'अलमेषा परित्रातुं राघवाद्राक्षसीगणं' इति प्रथितविभवायाः सीतायाः शरण्यत्वे दृढमध्यवसन्नाः तामेव भगवतीं श्रियं नित्यमज्ञातनिग्रहां ग्रन्थरत्नेनानेन संस्तूय पुनरवापुः नष्टां दृष्टिमित्यस्त्याभाणकः कश्चित्। एतेनैव ग्रन्थस्यास्य सुपठितस्य नेत्रपाटवाविष्कृत्त्व प्रथा सञ्जाता इत्यपि। वस्तुतः बहुशः श्रीमन्त्रविस्तारणरूपत्वात् मातृवात्सल्ययुक्तायाः 'न कश्चिन्नापराध्यति' इति

सदा गुणैकदृशः जगन्मातुः श्रोत्रमनोहारिश्लोक गुम्भरूपत्वात् तस्या उदाराया एव सकाशात् सर्वाभीष्टसिद्धिः विशिष्य नेत्रपाटवञ्चेत्यपि एतन्निर्वाहः सुशक एव । एवं वक्तृ विषययोः उत्कर्षः वैलक्षण्यञ्च अत्र निरूपिते।

अथ विषयप्रतिपादनरीति विषये किञ्चित्प्रस्तूयते। लक्ष्मीसहस्रञ्चैतत् त्रयोदशोत्तरसहस्रश्लोक परिमितः पञ्चविंशति स्तबकैः प्रारम्भ, प्रादुर्भाव, वक्षस्स्थलावस्थान, कारुण्य, कटाक्ष, यत्न, मङ्गळ, सौन्दर्य, शृङ्गार, ऐश्वर्य, क्षान्ति, उत्सव, वदान्य, यमक, नक्षत्रमाला, चित्रचरित्र, नामवैभव, धाम वैभव, अभयप्रदान, देवतान्तर परिसंख्या, दशावतार, चित्र, सङ्कीर्ण, निर्वेद, शरणागति नामकैः युक्तः लक्ष्म्याः वैभवं सम्यगवबोधयति। 'श्रीमिवरूपिणीं', 'तां देवमायामिव वीरमोहिनीं', 'तया. अभिरामया विभुश्रिया..', 'वक्षः पीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या' इत्यादि प्रमाणैः रूपश्रिया अप्रतिमया विराजयन्तीं श्रियं पञ्चत्रिंशदुत्तरद्विशतैः पद्यैः अत्र ग्रन्थकृत् स्तौति। अतः सौन्दर्यस्तबक एव अस्य ग्रन्थस्य पादभागमाक्रमते। श्रीसूक्तेपि लक्ष्म्याः रूपातिशयं बहुधा प्रस्तुतमिति अत्र तद्विस्तारः कृतः इति ज्ञेयं। अन्यदप्यत्र शक्यते वक्तुं यत्-लक्ष्म्याःगुणवर्णने सर्वप्राचीनग्रन्थकर्तॄणां उपपादनरीतिं इह वेङ्कटाध्वरि कविरतिशेत इति। अत्र च कतिचनोदाहरणानि यथा-

प्रारम्भस्तबके मङ्गळप्रकरणे भगवतः, शेषिदम्पत्योः, लक्ष्म्याः, गुरुपरम्परायाः, वाल्मीकिमहर्षेः, पराशर मुनिवरस्य, श्रीमद्वेदान्ताचार्याणां च नमस्कारान् विदधाति ग्रन्थकृत्।

प्रथमश्लोक एव ग्रन्थकर्तुः आशये लक्ष्मीनित्ययुक्तस्यैव ब्रह्मत्वमिति व्यक्तं प्रतीयते। यथा, 'ब्रह्मणि श्रीनिवासे' इति श्रीभाष्यकारोक्त दिशा वेङ्कटब्रह्मणे नमस्कारानाकलयद्भिः लक्ष्मीनित्ययोगः तथाभूतस्यैव विश्वसर्गादिलीलत्व प्रतिपादनं च स्पष्टमभिहितं। 'स्वधया तदेकं' 'युजे वां ब्रह्म पूर्व्यं नमोभिः', 'सुमज्जानये विष्णवे' 'बृहत्ते विष्णो सुमतिं भजामहे' [अत्र बृहच्छब्देन द्योतितं ब्रह्मत्वं सुमति वाच्याया लक्ष्म्या एवेति स्वरसतः प्रतीयते] । 'वाचस्पतिं

विश्वकर्माणं' 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे' इत्यादि श्रुतयः भगवतः सर्वदा लक्ष्मीयुक्तत्वमभिदधति। अत एव अत्र लक्ष्मीयुक्तस्य ब्रह्मत्वोपपादनं सङ्गच्छते।

अत्र द्वितीयश्लोकः बहुस्वरसार्थ गर्भितः। असदृशं - इति भगवतः 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतं समाधिकदरिद्रत्वं, लक्ष्म्याः 'अ'स्यैव सदृशं - सर्वथा अनुरूपं, 'तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणां', 'अस्येशाना जगतो विष्णुपत्नी' 'यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम', 'ईशाना देवी भुवनस्याधिपत्नी', 'सा नो लोकममृतन्दधातु', इत्यादि श्रुतिशतस्मृतिवचनादि सिद्धं भगवतः सर्वप्रकारं सादृश्यमभिदधाति। अरुणाब्जदृशं इति भगवत्पक्षे 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिसिद्धं पुण्डरीकाक्षत्वं, अरुण इति सूर्यस्य, अब्ज इति चन्द्रस्य च ग्रहणात् 'चक्षुषी चन्द्रसूर्यौ' इति श्रुत्युक्तं सूर्यचन्द्रचक्षुष्ट्वं च व्यञ्जितं। लक्ष्मीपक्षे च प्रातरम्बुजविडम्बि लोचनत्वं अवगम्यते। प्रस्विन्नपयोधरस्फुरन्मूर्तिं इति भगवत्पक्षे 'नीलतोयद' सङ्काशत्वं श्रुतं व्यज्यते । लक्ष्मीपक्षे च सङ्गमजनित स्वेदादियुक्त पयोधरवत्त्वरूपश्रीर्व्यज्यते। मनसि दधीमहि सततमित्युभयत्रान्वेति। मातारं इत्यत्र भगवत्पक्षे - 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि' 'इदं विष्णुर्विचक्रमे' 'त्रीणि पदा विचक्रमे' इत्यादि श्रुतिषु बहुधा उक्तं मानं त्रिजगतां अभिहितं। अत्र केचित् लक्ष्म्या अपि जगद्व्यापित्वं न मृष्यन्ति। अत्र ग्रन्थकृदाशयः व्यक्तीक्रियते। मातारं इत्यस्य माङ् माने इति धातोः माति इति माता इति पुंलिङ्ग रूपनिष्पत्तेः इदं लक्ष्म्याः विशेषणं न भवितुमर्हतीति पूर्वपक्षिणामाशयः।

यद्यप्येतदेवमेव तथापि लक्ष्म्याः भगवन्नित्ययोगस्य बहुशः श्रुतत्वात् - कारणदशायां 'आनीदवातँस्वधया तदेकं। तस्माद्धान्यन्नपरः किञ्चनास' इति सृष्टेः प्राक् अव्याकृत नामरूपे सति जगति सूक्ष्मचेतनाचेतनविशिष्टब्रह्मणः नित्ययुक्तत्वं, उपाय दशायां-यथा भगवतः मोक्षोपायत्वं ''यमेवैष वृणुते तेन

लभ्यः'' 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं' 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिषु विशदं; अत एव तस्य शरण्यत्वं 'मुमुक्षुर्वै शरणमहं प्रपद्ये' 'सर्वस्य शरणं सुहृत्' 'पितामाता भ्राता निवासश्शरणं सुहृद्गतिर्नारायणः' इत्यादिषु विहितं; एतादृशविभवं लक्ष्म्या अपि श्रुतमप्यवधेयमेव। यथा-श्रीसूक्ते-'चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टां उदारां । तां पद्मनेमीं शरणमहं प्रपद्येऽलक्ष्मी र्मे नश्यतां त्वां वृणे ।' इति लक्ष्म्याः शरण्यत्वं सुव्यक्तं । अत्र शरणवरणमप्यमृतत्वार्थैवेति असङ्कुचित अलक्ष्मी नाश प्रार्थनया द्योत्यते । अत्र 'ईश्वरीं सर्व भूतानां' इत्यस्याः सर्वभूतेश्वरीत्वं एतत्फलप्रदान सामर्थ्यं वक्ति । उत्तरत्र 'श्रियं वसाना अमृतत्वमायन्भजन्ति सद्यस्सविधा वितद्यून्' इत्युपसंहाराच्च अयमर्थः स्फुटः ।

श्रद्धासूक्ते च- 'श्रद्धया देवो देवत्वमश्नुते । श्रद्धा प्रतिष्ठा लोकस्य देवी । सा नो लोकममृतन्दधातु' ।'ईशाना देवी भुवनस्याधिपत्नी' । 'कामवत्सामृतं दुहाना' । 'विश्वस्य भर्त्री जगतः प्रतिष्ठा । ताँ श्रद्धाँ हविषा यजामहे' इत्यादिषु बहुधा लक्ष्म्याः वैभवं वर्णितमस्ति । अत्र मोक्षोपायत्वं, जगच्छरीरत्वं, ऐश्वर्यं, आधिपत्यं च स्पष्टमेवाभिहितं ।

अन्यत्रापि अदितिसूक्ते लक्ष्मीपरे- (अस्य सूक्तस्य लक्ष्मीपरत्वं 'अदित्यै विष्णुपत्न्यै' इत्यादि श्रुतिभिः अदिति शब्दस्य लक्ष्म्याः नामान्तरत्वप्रतीतेः व्यक्तं) - 'अदितिः पात्वँहसः' 'महीमूषुमातरँ सुव्रतानां ऋतस्य पत्नीमवसे हुवेम । दैवीं नावँ स्वरित्रा मनागसमस्रवन्ती मारुहेमा स्वस्तये । इमाँ सुनावमारुहँ शतारित्राँ शतस्पयां । अच्छिद्रां पारयिष्णुं' इत्यादिना लक्ष्म्याः पापमोचकत्वं, महत्वं, जगन्मातृत्वं, सर्वकर्मसमाराध्यत्वं, तत्फलप्रदत्वं, ऋतशब्दितस्य ब्रह्मणः पत्नीत्वं, रक्षकत्वं, अप्राकृतत्वं, मोक्षोपायत्वं - भगवतः 'अमृतस्यैष सेतुः' 'एषसेतुर्विधरणः एषां लोकानामसम्भेदाय' इत्यादौ श्रुतं सेतु रूपित संसारसन्तारोपायत्वं लक्ष्मीयुक्तस्येति अत्र लक्ष्म्याः नौरिति रूपणेन ज्ञाप्यते - अशेषदोष प्रत्यनीकत्वं समस्तकल्याणगुणाकरत्वं

इत्युभयलिङ्गत्वं ('दैवीं', 'सुनावं' इत्याभ्यां कल्याणगुणवत्त्वं, 'अनागसं', 'अस्रवन्तीं', 'अच्छिद्रां' इत्यादिभिः हेयप्रत्यनीकत्वञ्च व्यज्यते), पारयिष्णुमिति च संसारसन्तारोपायत्व मित्येते उक्ताः गुणाः लक्ष्म्याः भगवत्साहचर्यं सर्वथा सर्वदा च निरूपयन्ति । उपेयत्व दशायां लक्ष्मीयुक्तत्वं भगवतः एकदेशिनामप्यभिमतमिति नतदिह प्रस्तूयते ।

वस्तुतस्तु - उपनिषत्सिद्धान्ते, तैत्तिरीये, ''स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वं इदं जगत् स च भूतँ स भव्यं......... ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान् तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ........ ब्रह्मणे त्वा महस ओमित्यात्मानं युञ्जीत'' इत्यत्र 'महोपनिषदं' 'देवानां गुह्यं' इत्यादि विशेषितं परतत्वनिर्णायकं प्रकरणं संसारतारकत्वेन सर्वैः सावधानं अनुसन्धातव्यः। अत्र भगवतः पुरुषसूक्तप्रतिपादित जगत्कारणत्वं, पञ्चधा अवस्थितत्वं, परब्रह्मत्वं, मोक्षोपायभूतत्वं तस्य च उपायेषु बहुषु सत्स्वपि 'एषां तपसां अतिरिक्तं' इत्यभिमतं न्यासाख्यं एव परमं प्रधानञ्चेत्यादि अनेके विषयाः सूपपादिताः। अत्र पञ्चस्वप्यवस्थासु भगवतस्सलक्ष्मीकत्वमेव विशिष्य उपनिषत्स्वभिहितं। यथा विवृतं बृहदारण्यके - ''इन्धो ह वै नामैष योयं दक्षिणेक्षन् पुरुषस्तंवा एतमिन्धं सन्तमिन्द्रइत्याचक्षते - - -'' इति आदित्यमण्डलान्तर्वर्तिनं पुरुषं दक्षिणेक्षिण स्थितं च एकमेवाभिधाय तस्य पुण्डरीकाक्षस्य नारायणस्यैव इन्धनामकत्वं तस्य इन्द्र इति व्यवहारं च प्रक्रम्य ('इन्द्रं निचिक्युः परमे व्योमन्' 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादि श्रुतिषु इन्द्रशब्देन परमात्मा अभिहितः) ''अथैतद्वामेक्षणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष सँस्तावो य एषोन्तर्हृदय आकाशोथैनयोरेतदन्नं य एषोन्तर्हृदये लोहितपिण्डोथैनयो रेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सैषा सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति - - - हिता नाम नाड्यः अन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवति - - -'' इत्याद्युक्तं। अत्र विराडिति

श्रियो नाम, 'राडसि बृहतीश्रीरसीन्द्रपत्नी', 'विराट् वाक्' 'विराड्वा इदमग्र आसीत्' इत्यादि श्रुत्यनुसारात्। तयोः संस्तावः सहवसतिस्थानं य एषोन्तर्हृदय आकाशः इत्युक्तेः अन्तर्यामिदशायां सलक्ष्मीक एव भगवान् सन्निधत्ते।

अत्र एनयोरेषा सञ्चरणीसृतिः मार्गः यैषा हृदयादूर्ध्वा नाडी मूर्धानमभिनिःसरति। तयोर्ध्वमायन् उपासकः अमृतत्वमेति। अत्र परमात्मनः आतिवाहिकत्वेन उपासकं ब्रह्म [स्वं] गमयित्रवसरे तेन सह अनया सृत्या गच्छतः लक्ष्मीविशिष्टत्वमभिहितमिति पररूपेपि सलक्ष्मीक एव भगवान् आस्ते। 'ह्रीश्चतेलक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे' इतिचनित्ययोगः, अन्यत्रविश्रुतः। एवमेव व्यूहरूपेपि बोध्यं। ''अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्। शुक्रेण ज्योतींषि समनुप्रविष्टः-'' इति पञ्चधा अवस्थितेः ईश्वरे आम्नानात्, (अपारे, अंभसि - व्यूहरूपं, भुवनस्य मध्ये - विभव, अर्चारूपे, महतोनाकस्य पृष्ठे महीयान् - पररूपं, शुक्रेण ज्योतींषि समनु प्रविष्टः - अन्तर्यामी (हार्दः)। एषु पररूपे, हार्दे च स्पष्टश्रुत्या शिष्टा अप्युपलक्षिता भाव्याः। नित्ययोग श्रुतिबलात् स्मृतितश्च - 'राघवत्वेभवत्सीता रुक्मिणी कृष्ण जन्मनि। अन्येषु चावतारेषु विष्णोरेषानपायिनी'ति विभवरूपे सलक्ष्मीकत्वं, 'क्षीराम्भोनिधिरत्नमण्डपमहासौवर्णसिंहासने वामाङ्के स्थितया प्रसन्नवदनश्री कान्तयालिङ्गितं' इति व्यूहरूपे तथा प्रत्यक्षत एव सर्वार्चा रूपेषु सलक्ष्मीकत्वं ज्ञायते।

एतेन महालक्ष्म्याः विभुत्वं चेतनाचेतनरूपसकलजगत्सामानाधिकरण्यं, तमसः पारवर्तित्वं, (अप्राकृतदेशविशेषे अयोध्याख्ये विष्णोः परमे पदे), साक्षान्मोक्षोपायत्वं, तदर्थं उपेतॄणां सर्वकर्मक्षयकारित्वं, तत्प्राप्त्युपायभूते न्यासाख्ये आत्मसमर्पणे उद्देश्यत्वं च कण्ठोक्तितः ज्ञायते। एतदेव वेदान्ताचार्यैः बहुत्र, बहुधा, बहुशः प्रत्यपादि सर्वथांग्यकारि च ग्रन्थकृद्भिरेतैरि त्यलमतिविस्तरेण।

अत्र 'मातारं' इति भगवद्वाचकपदे लक्ष्म्या नित्ययुक्तस्यैव भगवतो निर्देशः, तथा च लक्ष्मीपरत्वेनापि वर्णने औचित्यं द्रष्टव्यं । 'मातरं' इति पदञ्च भगवति - 'स एव पुत्रस्सपिता स माता' 'पितामाता भ्राता,.... इत्यादौ श्रुतत्वात् अन्वेति । लक्ष्मी पक्षे स्पष्टमेव । अत्र च लक्ष्म्याः जगज्जननीत्वं औपचारिकं मन्वानैः उदाहृत श्रुत्यादि विरोधः दुस्तरः । अन्यश्चात्र विषयः स्वरसः प्रतीयते- मातारं इति पदस्य लक्ष्मीपक्षे व्याख्याने, मातरं इत्यस्य भगवत्परत्व वर्णने च लिङ्गव्यत्ययः सह्य इति । अनेन च अर्थपौष्कल्यावाप्तिरित्यपि । अत्र ग्रन्थकर्त्राशयः लक्ष्म्याः विभुत्वं, जगत्कारणत्वं, मोक्षोपायत्वं, मुक्तभोग्यत्वञ्चेति बहुशः स्वकण्ठोक्तिभिरेव विशदं ज्ञायते । अत्रैव प्रारम्भस्तबके - समग्रश्लोके वेदान्ताचार्याणां वैभवप्रकाशनावसरे लक्ष्म्याः विभुत्वं सुष्ठुप्रतिष्ठापितमाचार्यैरित्युक्तं । ऐश्वर्यस्तबकस्तु समग्रोपि लक्ष्मी विभुत्वप्रकाशनैदम्पर एवेत्यप्यतिरोहितमिदं सर्वेषां । उपरिष्टाच्च अलङ्कारविशेषाः पण्डितजनमनोहारि भंग्या आरचिताः नवनवोन्मेषयुक्ता विषयवैलक्षण्यं सम्यक् अतिशाययन्ति ।

## स्तबकवाच्यार्थ संग्रहः

आरम्भस्तबके एते बहुधा उपोद्घाटितवन्तः- मङ्गलानन्तरं एतत्कृतिप्रारम्भः वाक्छुध्यर्थं, वाक्साफल्याय, स्वपाण्डित्यप्रदर्शनाय, वेति वदन्तः अत्र स्वस्य हास्यास्पदसाहसित्वं, मत्सरिणां उपेक्ष्यत्वं, स्ववाक्चापल्यं, निवृत्तनीचस्तुतित्वं, निर्लज्जं क्षमालम्बनत्वं, प्रकृष्टप्रज्ञसङ्घाननुप्रवेशः, कैमुत्येनस्वाशक्तिः, सर्वस्तोतॄणामविशेषत्वं, फलपरिणाति साधारण्यं, श्रियः प्रसादात्सुकरत्वं, वेदान्तदेशिककृत पादुकासहस्रापेक्षया स्वकृतेः विस्मयनीयत्वं, उपादेयतमत्वं च, स्वसमानधर्मणः पण्डितस्य भावि काले भविष्यत्व विश्वासः, अस्याः स्तुतेः

परिग्राह्यत्वं, लक्ष्मीकटाक्षात्पूरणाशंसेत्येतादृशा विषयाः मनोज्ञं निरूपिताः। अत्र श्लोकानां ध्वन्यर्थोपि बहु स्वरसश्रुत्यर्थोपपादकः पण्डितान्तः करण मावर्जयति। यथा दशमे श्लोके 'स्वं वाग्ब्रह्म' इति पदं प्रयुञ्जानैरेभिः नमो वाचे - - - नमोवाचस्पतयेनमोविष्णवे बृहते' 'सर्वस्यै वाच ईशाना' 'वाचस्पतिं विश्वकर्माणं' . . इत्यादिषु श्रुतिषु प्रसिद्धं लक्ष्म्याः वाक् शब्द निर्देश्यत्वं, तस्याः ब्रह्मत्वञ्च स्वरसं ध्वनितं। स्वमित्यनेन स्वान्तर्यामि भूता लक्ष्मीः एतत्स्तवकरणे आत्मानं नियोजयतीति एतेन स्वस्याः वाचः कुक्षितिभुजां मिथ्यास्तवनादि जनित दोषानपामृज्य तां पावनीकरोति अनेन स्तुतिरूपेणेति द्योत्यते। एवं अन्यत्रापि बहवोर्थाः यथामति ऊहनीयाः सन्ति।

इतः परं अवशिष्ट स्तबकेभ्यः ततस्ततः केचनश्लोकार्थाःस्थालीपुलाकनयेन सङ्गृह्यन्ते।

2. प्रादुर्भाव स्तबके तावत् क्षीरोदधिमन्थनावसरे भगवतः कूर्मावतारे अनेकमङ्गलद्रव्यान्तरैस्सह महालक्ष्म्याः आविर्भावः प्रपञ्चितः। अत्र एकोनपञ्चाशे श्लोके लक्ष्म्याः जगन्मातृत्वं सरसं अभिहितं। यथा :- 'पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरेः' इत्युक्तप्रकारेण क्षीरोदधेरुद्भूता लक्ष्मीः सर्वसमक्षं भगवद्वक्षस्स्थलमधिरुरोह। अत्र कुलीनानां सतीनां परपुरुषसन्निधौ स्वकान्तस्यापि अङ्काद्यारोह रूप स्वैरकेलिर्नसङ्गच्छते इत्याक्षेपं समादधानैः ग्रन्थकृद्भिः 'सह दयिततमेन स्वैरकेळौ सतीनां न खलु निजशिशूनां सन्निधिर्व्रीड हेतुः' इति प्रत्युक्तं। अत्र स्वापत्यसन्निधिः शिशुदशायां न व्रीडहेतुरित्युक्तेः लक्ष्म्याः मुख्यमेव जगन्मातृत्वं तथा च तस्याः अत्र अवतारविशेषमात्रं च द्योत्यते।

3. वक्षस्थलावस्थानस्तबके 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा, मधुविजयिनः वक्षः पीठीं स्वकान्त्या भूषयन्ती प्रभासा यशसा ज्वलन्ती लक्ष्मीः स्तुता। स्तबकप्रथमश्लोके (53) भगवतः वक्षस्थलावस्थितिं हृदयङ्गमामिति शब्देन निर्दिशता अयमर्थः हृदयङ्गमं वर्णितः। उत्तरत्र (58) समुदयद्भुजिनेषु

जनेषु भगवतः हृदि प्रतिघः (निग्रहसङ्कल्पः) मा भूदित्येव अखिलजगद्धितं अवदधानया श्रिया भगवद्धृदयं अधिष्ठितं इति वर्णितं। सौकुमार्ययुक्तापि कठोरं भगवदुरः स्थानं शरण्या सती मृष्यतीति (61) तमे व्यञ्जितं। (77) तमे पद्ये क्षमामयी लक्ष्मीः यदि भगवद्वक्षः क्षणमप्यत्यक्षत् तदा अस्मान् भगवदपचारसन्ततिं सन्ततं तन्वानान् निग्रहोद्युक्तः नाथः नारक्षिष्यदिति स्पष्टं तस्या वात्सल्यप्राचुर्यं व्यञ्जितं।

4. कारुण्यस्तबके - लक्ष्म्याः दयासागरत्वं मनोज्ञं वर्णितं। अत्र भगवतः - राघवत्वे सीतात्वं भजन्त्या लक्ष्म्या काकासुरस्य, स्वस्यावाच्याहिंसां आरचितवतीनां अशोकवनिका राक्षसीनां, च रक्षा, हनूमतः वालाग्नेः शिशिरताकरणं च चमत्कारेण उपपादितं। अत्र लक्ष्म्याः भगवद्दयोत्तम्भनञ्च कारुण्यकार्यमिति (97) तमे श्लोके सुष्ठूक्तं। अत्र (101) तमे पद्ये'अनुकम्पां अकम्पां, नावमवलम्बे', इत्यनेन पूर्वोक्त अदितिसूक्तार्थजातं सर्वं संस्मारितं।

5. कटाक्षस्तबके - 'अपाङ्गा भूयांसो यदुपरि - -' इत्यादिश्लोके अभियुक्तैरभिहितं लक्ष्मीकटाक्ष महिमा चतुष्षष्टि श्लोकैः सम्यग्विवृतः। लक्ष्मीसहस्रे सौन्दर्य स्तबकानन्तरं अयमेव स्तबकः बहुलश्लोकयुक्तः इत्यनेनैव एषां लक्ष्मीकटाक्षविशेषः स्फुरति। अनेन स्वस्य तत्कटाक्षात् सुकटाक्षप्राप्तिरपि (नेत्रपाटवप्राप्तिरपि) अभिव्यञ्जितेव। 'तस्मिन्दृष्टे परावरे' इति श्रुतेः 'यश्चरामं नपश्येत्तु यंच रामो न पश्यति' 'दृष्ट एव हि नश्शोकमपनेष्यति' 'यं पश्येन्मधुसूदनः' इत्यद्यनुसारात् भगवत्कटाक्षादमृतत्वप्राप्तिर्यथा सिद्धान्त्यते तथैव लक्ष्मीकटाक्षः भगवत्कटाक्षस्यापि कारणं भवतीत्यपि उपपादयितुं युक्तं। लक्ष्म्याः अत्युदारत्वात् कारुण्यात् च स्वयमेव तत्कटाक्षः सर्वेषां सुलभः अपि। अत्र लक्ष्मीकटाक्षस्य अन्वयव्यतिरेकाभ्यां दारिद्र्याधिराज्ये, अनालोचितविशेषं समत्वं सर्वदेहिनां दुष्कृतविनाशकत्वं, देहिनां देहि शब्द ह्रापकत्वं, भगवद्वशीकार करणत्वं, 'ग्रीष्मे शीतमिव ह्रदं'इतिवत् शीततटाकत्वं इत्यादि विभवाः वर्णिताः। इष्टसिद्धिः कटाक्षात् प्रागेवापि लभ्यत इति हनूमतः

सागरप्लवनं सीतादर्शनपूर्वमेव सञ्जातमिति दृष्टान्तितं (141) तमे। दुर्ग्रहदुष्कृतादिभिरतप्यत्वप्रापणं कटाक्षफलं विवृतं (145) तमे। अल्पस्यापि कटाक्षस्य महत्तरफलप्रदत्वं (152) तमे श्लोके चारु वर्णितं। 'धन्याःपश्यन्ति मे नाथं' इत्यादिवत् लक्ष्मीकटाक्षविषय एव धन्यः लोके इति (156) तमे पद्ये अभिहितं।

6. यत्नस्तबके - 'यदर्थमम्भोधिरमन्थ्यबन्धिच' 'यान्तर्हितेति' इत्याद्युक्तप्रकारेण लक्ष्मीलाभार्थं भूयांसं यत्नं विदधतः भगवतः प्रियपत्नीत्वं वर्ण्यते। रामावतारे बलातिबले मन्त्रे गृह्णंस्तानुपास्य विश्वामित्रयज्ञरक्षार्थं राक्षसान् विधमन् पुनः अहल्यां धूतपापां वितन्वंश्च मिथिलां गत्वा शशिखण्डमण्डनमहादोर्दण्डकोदण्डमुन्नम्य तां प्रापेति श्रमभूयस्तोपन्यस्यते। एवमेवाग्रे जटायु मोक्ष, सुग्रीवसहायार्थन, वालिवध, हनूमन्मुखेन लङ्कागमन, तद्दहन, समुद्रशरणवरण, सेतु बन्धन, सबान्धव रावण वधादि सर्वं यत्नं विदधे खलु। नकेवलमेतावन्मात्रम् दशाप्यवताराः भगवता लक्ष्मीप्रीत्यर्थमिव विहिता इत्यपि प्रतिपादितं। अत्र विशिष्य (176, 177) श्लोकौ अनुसन्धेयौ। एते निन्दास्तुति रूपेण भगवदुत्कर्ष (भक्तवत्सलत्व) प्रकाशकौ इति मन्तव्यं।

7. मङ्गलस्तबके मङ्गलदेवतायाः माङ्गल्यमहिमा वर्ण्यते। अत्र कवयः काव्यमुखे श्रीपदं लक्ष्मीवाचकं समस्तदोषपरिहाराय प्रयुञ्जत इत्युक्तं (207)। अत्र भगवतः मङ्गलमङ्गलत्वं लक्ष्म्यन्वारम्भादिति (214) प्रतिपादितं। सर्वमङ्गळायाः सर्वमङ्गलवस्तूनां च श्रीसकाशादेव माङ्गल्यमाप्तमिति न्यरूपि। अन्ते च (217) तत्क्रतुनयात् स्वपद भक्तानामपि स्वसमानश्र्यावहत्वमुक्तम्।

8. अष्टमः सौन्दर्यस्तबकः लक्ष्मीं सौन्दर्यपर्याप्तिभूमित्वेन निरूपयति। एष एव मनोहरो महत्तरश्च स्तबकेष्वत्र ग्रन्थे। अत्र आनुलोम्येन दिव्यकेशप्रभृति चरणारविन्दपर्यन्तं लक्ष्म्यास्सौन्दर्यं, प्रथमं द्वाविंशतिश्लोकैः केशकलापं, ततः द्वाभ्यां मुखवर्णनोपक्षेपकं, नवभिः मुखं, त्रिभिर्भ्रुवौ, एकादशभिर्नेत्रे, द्वाभ्यां ताटङ्कं, चतुर्भिस्सपरिकरं कर्णपूरं, षड्भिस्सताटङ्कं

श्रोत्रं, पञ्चभिर्नासिकां, चतुर्भिर्नासामौक्तिकं, षड्भिस्स्मितं, दशभिस्सूक्तिं, पञ्चभिर्दन्तान्, चतुर्भिर्जिह्वां, अष्टभिरधरोष्ठं, द्वाभ्यां कपोलौ, त्रिभिः कण्ठं, एकविंशत्या स्तनौ, पञ्चभिर्मुक्ताहारं, एकेन बाहू, नवदशभिः सकङ्कणं करद्वयं, चतुर्दशभी रोमरेखां, त्रिभिः वलित्रयं, चतुर्भिः नाभीं, नवभिः काञ्चीं, दशभिर्मध्यं, त्रिभिः श्रोणीबन्धं षड्भिस्सक्थिनी, चतुर्भिर्जङ्घां, तथा अष्टाविंशत्या पदद्वयञ्चेति क्रमेण अत्र प्रत्यङ्गपूर्णसुषमासुभगं वपुःश्रियः वर्णितं। अत्र लक्ष्मी सौन्दर्यस्य स्वयं आदिशेषेणापि कात्स्न्र्येन वर्णयितुं अशक्यत्वं सम्यगाविष्कृतं (219) तमे। अत्र यद्यपि कमपि एकं श्लोकं पृथक्कृत्य तत्रत्यविशेषः शक्यो लिखितुं अथापि स्वात्मसार्थक्याय लक्ष्म्याः पदकमलनति र्विधेयेत्यतः पादद्वयवर्णनविषयके द्वौ श्लोकौ उदाह्रियेते। 429 तमे श्लोके वस्तूनां सामान्यतः गुणवदनुषङ्गे तद्गुणाधानं स्वाभाविकं वितथीकृतं अत्यन्तरागिणि श्रीपादपद्मे रक्तमनसां मुनीनां वैराग्य भजनं अतिचित्रमिति सरसमभिहितं। 442 तमे च देव्याः चरणकमलयुग्मस्य संसृतिभयसन्तारकत्वं तत्पादाश्रितानां नखानां अपि तारकत्व (नक्षत्रत्व) आधानात्स्फुटमिति सम्यगवधारितं। अत्र मतिमान्द्याल्लेखविस्तरभियाच विरम्यत इति दिक्।

9. शृङ्गारस्तबके लक्ष्म्याः भगवता सुरतकेल्यनुभवः स्तूयते। 'शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव' इत्याचार्य श्रीसूक्तिवत् लक्ष्म्याः भगवच्छृङ्गाररससर्वस्व भावः प्रपञ्चितः। 'क्षणाणुवत्क्षिप्त परादि कालया प्रहर्षयन्तं महिषीं' इति हि परमाचार्याणामनुभवः। अत्र भगवतः रतिसमये पञ्चायुधान्विहाय चतुर्भि रपि करैः चातुर्येण लक्ष्म्यङ्गेषु सञ्चारयतापि पञ्चायुधाजिरेव हर्षभरात्कृतमिति (470 तमे) विरोधालङ्कारः, भगवदुपासनात् लब्धं निरञ्जनत्वं, नीरागत्वं, बन्धमुक्तिःच रतिसमये लक्ष्म्यापि लब्धमिति (नयनयुगे, अधरे, कचे च यथासंख्यमेषां प्राप्तिरभिप्रेता) अर्थान्तरन्यासालङ्कारः (482 तमे) मालोपमया शेषिदम्पति वर्णनञ्च बहु हृद्यं (501) तमे वर्णितं।

10. ऐश्वर्यस्तबके महालक्ष्म्याः स्वरूपेणैव विभुत्वं प्रतिपाद्यते। आरम्भश्लोक एव 'विश्वंभरसमैश्वर्यां विदुर्यां ब्रह्मवादिनः' इति वदता

ग्रन्थकृता स्वाशयस्स्फुटीकृतः। अत्र मित्रावरुणादि द्विदेवत्योद्देश्यक विधिवत् प्रपन्नरक्षाविधौ उभयोरप्यविशिष्टं व्यासज्यस्थितं च शेषित्वमिति कण्ठोक्त्या निरूपितं। प्रत्यक्त्वाच्छ्रियः भगवद्गुणत्वं (तद्विशेषणत्वमिति यावत्) न युज्यते इति चोक्तं। लक्ष्म्याः जीवकोटिप्रवेशं मन्वानान्प्रति त्वयैतत् विष्णुना चाम्ब जगद्व्याप्तं चराचरं' इति विष्णुपुराणोक्तिं प्रमाणयता तन्मतमुद्धूतं। 'अस्येशानाजगतोविष्णुपत्नी' इति श्रुतिमपि श्लोके युनक्ति ग्रन्थकृत्प्रमाणप्रदर्शनार्थं। श्रीसूक्तञ्च श्रीस्वरूपज्ञाने प्रमाणोत्तमं वदन्लक्ष्म्याः भगवत्समवैभवममंस्त। यद्यप्युभयो श्शेषिदम्पत्योः विश्वव्याप्तिरुद्घुष्टा, तथापि भगवतः स्वरूपेणैव, लक्ष्म्यास्तु ज्ञानमात्रेण तन्निर्वाह्यं इति वदतां मतं च विधुनोति। पुनश्चोपबृंहण मुखेनापि लक्ष्म्याः वैभवं सुगममिति वदन् साङ्गप्रपदनं अन्वतिष्ठदस्मिन्स्तबके ग्रन्थकृदिति संग्रहः ।।

11. क्षान्तिस्तबके - लक्ष्म्याः क्षमयैवास्माकं महतामागस्ततीनां प्रतीकारः प्रपञ्चितः। क्षमयैव मूर्तिमती लक्ष्मीरत्र बहुशः उपवर्णिता। काकासुरमपि क्षमया पालितवत्याः किं वा किल्बिषं कियदपि घोरं अमर्षमादध्यादिति विस्मयमुखेन श्रियः 'अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहां' इत्युक्तविभवमाविष्कृतं। अस्मिन् स्तबके ग्रन्थकृतः आर्जवं, दैन्यं तथा लक्ष्म्याः क्षमालाभविश्वासदार्ढ्यं च सम्यक् उपपादितं लक्ष्यते। हनूमन्तं सीताहिंसाकृद्राक्षसीनां वधानुमतिवरं याचन्तं सूक्ष्मतर धर्मोपदेशसहितं तद्वधात् निवारण मुखेन स्वीयं क्षान्तिसीमत्वं अभिव्यञ्जितमिति तत्क्षमा नास्माभिः सामस्त्येन उन्नेतुमपि शक्यं इत्युच्यते। 544 तमे च श्लोके क्षमामयीं रमां हित्वा देवतान्तरं कुतस्सेवतांतरां कोपि इति लक्ष्मी देवतान्तर स्वरूपविमर्शपुरस्सरं उपपादितं। क्षमा सत्त्वात् अपचारकृतेरपि धैर्यन्तदेव ददातीत्यपि व्यतिरेकेण देव्याः दयासान्द्रत्वं वर्णितमस्ति।548 तमे संग्रहेण मद्रक्षणे त्वत्क्षमैव कारकं नतु मच्चेष्टितानीति सम्यक् अवधारितं।

12. उत्सवस्तबके लक्ष्म्याः फणिपतिवाचस्पतिप्रभृतिवर्ण्यं उत्सव वैभवं अल्पधिया स्वेनस्तूयत इति नैच्यमावेदयन् सर्वप्राणिवर्गाभिगम्यत्वं,

पश्यतां मनोनयनहारिता, सिसेविषा महिमा (559) प्रणिनंसूनां भक्त्यनुसन्धानं, (572) सर्वसमाश्रयणीयत्वं, (573) सर्वस्तुत्यत्वं (576), सुकर भजनत्वं (580), सर्वेष्टदायित्वं (599) इत्यादि गुणजातं विस्तृतं ।

13. वदान्यस्तबके - 'उदारां' इति श्रीसूक्तार्थं विस्तृणानः श्रियः वदान्यतां अनन्यजनसामान्यामाचष्ट । (604) तमे भंग्यन्तरेण 'देवित्वन्महिमावधिर्नहरिणा नापि त्वया ज्ञायते' इत्युक्तार्थः स्मार्यते । (606) तमे औदार्यमपि संक्रामयति श्रीः अर्थिभ्य इति मनोज्ञं प्रत्यपीपदत् । ('प्रार्थिनः प्रथमे तस्य चरमान् पर्यपूरयन्' इतिवत्)। (613) तमे प्रख्यातदात्रपेक्षया श्रियः उत्कर्षः निन्दास्तुत्या प्रकटीकृतः । प्रपदन, स्वदारिद्र्यनिवारणार्थनाद्यर्थाः (621) तमे प्रतिपादिताः ।

14. यमकस्तबके - कवेः अलङ्कार विद्यालङ्कार भूत श्लाघनीय चमत्कृतिमत्त्वं स्फुटं व्यज्यते । एकषष्टि पद्यमितेऽस्मिंस्तबके स्वरव्यञ्जनसमुदाय पौनरुक्त्ये आवापोद्वापादि चित्ररूप शब्दार्थालङ्कार संसृष्टियुत यमकस्य बहुधा श्रीगुणवर्णनाय उपयोगः प्रदर्शितः । अस्य च दुरूह बह्वर्थगर्भत्वात् पटुप्रज्ञानामेव स्वारस्यातिशयावहत्वाच्च नातः परं किञ्चित् उच्यते । अत्र श्रियामेव अनन्या भक्तिः अर्थितास्ति ( 624) । तन्नामसहस्र सङ्कीर्तनात् योगिराजत्वावाप्तिः (634) सूचिता । 653 तमे लक्ष्मीकटाक्षेण दिव्यधामप्राप्तिरुक्ता । 668 तमे च तद्दृष्टेः पावनत्वं व्यञ्जितं । 671 तमे श्रीकटाक्षवतां नमस्या विहिता । मुक्तभोग्यत्वं (677) तमे अभिहितं ।

15. नक्षत्रमालास्तबके - अश्विन्यादि रेवत्यन्त नक्षत्रनामानि सन्दर्भवशात् प्रदर्शयन् प्रथमश्लोक प्रभृति त्रयोदश श्लोक पर्यन्तं आरोहणक्रमेण एकैकाक्षराधिकपादतया पञ्चदशप्रभृति सप्तविंशति श्लोकपर्यन्तमवरोहणक्रमेण ऐकैकाक्षर न्यूनपादतया नायकरत्नस्थानीय चतुर्दशश्लोकेन च नक्षत्रमालाख्य हार सन्निवेशमनुकुर्वता श्लोकसमुदायेन लक्ष्मीं वर्णितवान् । अत्रपूर्वफल्गुन्याः 'आर्यमतारकं' इति मञ्जु वर्णितं ।

उत्तराणां अपादानां च 'विश्वदेवतारा' पदेन निर्देशः कृतः । इतरत्सर्वं स्पष्टं नक्षत्रनामकं विहितं । 705 तमे लक्ष्मीप्रपदनं आचरितं ।

16. चित्रचरित्रस्तबके - लौकिकनयापेक्षया लक्ष्म्याः अघटितघटन सामर्थ्यं बहुधा विवृतं । यथा- हनूमद्वालाग्नेः शीतीकरणं, मूकानां वाचालीकरणं, इत्यादि । तत्र 720 तमे कवेर्नैच्यमनुसंहितं ।

17. नाम वैभवस्तबके - लक्ष्म्याः नाम्नां सर्ववेदेषु सादरं बहुशः पठितत्वं, (728) कीर्तन सौलभ्यं भोग्यता च (734), भगवन्नामभिस्सहश्रीनामकीर्तनं (741), नामपावकत्वं सर्वाविशेषं (753), मोक्ष प्रदत्वं (761) इत्याद्यर्थाः प्रदर्शिताः ।

18. धामवैभवस्तबके - लक्ष्म्याः पद्मवासिनीत्वं बहुधास्तुतं । पद्मश्रैष्ठ्यं च आविष्कृतं । उत्तरत्र षट्पदपदत्वेन तस्यैव निर्देशः सचमत्कारं कृतः । द्वयमन्त्रगतत्वं (प्रतिपाद्यत्वं) लक्ष्म्याः अनेन स्मार्यते ।

19. अभयप्रदानस्तबके - श्रियः भीताभयप्रदत्वं काकासुर, लङ्काराक्षसीषु च आविष्कृतं भृशं वर्ण्यते । अत्र अभयं सर्व भूतेभ्यो ददतः भगवतः प्राप्तं भयं घोरं 'अलमेषा परित्रातुं राघवाद्राक्षसीगणं' इतिवत् श्रीः शमयति । अस्याः सकाशात् न कस्यापि भयसंभावनापि अनुग्रहमयीत्व नित्यमज्ञात निग्रहत्वाभ्यां । अत एव हि अस्याः जगन्मातृत्वं, पुरुषकारत्वञ्च युज्येते । 'नकश्चिन्नापराध्यती' ति ह्यस्याः अनुग्रहप्रकारसञ्चारः । अत एव 'लघुतरा रामस्य गोष्ठीकृता' इत्यभियुक्ताः । एतेंशाः स्तबकेस्मिन् प्रपञ्चिताः । 817 तमे अभयं भयंइत्युभयमपि श्रीप्रसादान्वयविपर्ययादिति मनोज्ञमुपवर्णितं । 819 तमे 'भीषास्माद्वातः पवते' - इत्यादि श्रुत्युक्त विभवस्यापि देवस्य प्रसादने श्रीप्रसादापेक्षा सम्यगुन्नीता । 832 तमे स्वरक्षणं श्रुतिरक्षणरूपणमुखेन प्रार्थितं चित्तरञ्जकमस्ति ।

20. देवतान्तरपरिसंख्या स्तबके - लक्ष्म्या प्रसन्नया इन्द्रादीनां कृतो महानुग्रहः तत एव त्रैलोक्य क्षेमलाभश्च विविधं वर्ण्यते । अतः देवतान्तर भजन नैरर्थक्यं लक्ष्म्या एव सेव्यत्वञ्च फलतः । अतः कल्पद्रुकल्पे सुसंराधे सर्वफलप्रदे देवतायां सत्यां कुतः क्षुद्रान् देवतान्तरान् भजेत् इति (845), (851) तमयोःसम्यगुक्तं । लक्ष्मीकटाक्षात् प्राप्तस्याप्यर्थस्य सन्मतिदायित्वं वैराग्यापादनद्वारा अपवर्गाधिकारप्रापकत्वं क्रमेण अपवर्गदापनत्वञ्चास्तीति 860 तमे उक्तं ।

21. दशावतारस्तबके भगवतः सर्वेष्वप्यवतारेषु लक्ष्म्याः अनपायिनीत्वं वर्ण्यते । नकेवलमेतावन्मात्रमपि तु लक्ष्म्याः योगादेव भगवतोवताराणि सफलानीत्यप्युक्तं (865)। अत्र विशेषतः दशावतारानपि वर्णयित्वा अन्ते श्रियः अपाङ्गे दशावतार ध्यानरूपणं (898), लक्ष्म्याः एकैकेप्यङ्गे दशावतारेन्यतम स्मारणवर्णनेन दशावतारसमुदायं तदङ्गशोभायां रूपणं (899) च बहु स्वरसं वर्तते ।

22. चित्रस्तबके 'स्वर, वर्ण, स्थान बन्ध, यतीनां नियमस्तथा । प्रहेलिका च गूढं च च्युतकं चित्रमुच्यते' इत्युक्त लक्षणेन अष्टविध शब्दचित्रप्रधान अलङ्कारविशेषेण श्रीविषयाः श्लोकाः ग्रथिताः । अत्रापि यमक स्तबकवत् अर्थविशेषानुसन्धानं तु महाप्राज्ञानां अलङ्कारविदां शब्दज्ञानामेवेति नास्माकमत्र प्रवेशः । अन्ते अत्र बहूनां श्लोकानां बन्धचित्रस्य रेखादिविन्यासः प्रदर्शितोस्ति । एतच्च स्तबकं वेदान्ताचार्याणां पादुकासहस्र यादवाभ्युदययोः चित्रपद्धत्यादि प्रकरणस्थ श्लोकैस्साकं पठितं कवीनामेषामपि महाकवित्वं सुलभमावेदयेदिति निश्चिनुमः ।

23. सङ्कीर्णस्तबके श्रियः नियतं कञ्चिद्गुणमनवलम्ब्य यथाकथञ्चिदुपस्थितानां तद्गुणानां वर्णनं क्रियते । समस्तगुणविस्तारसमावेशनिवेशनत्वेन श्रीरत्र स्तूयत इति । अत्र काव्य, नाटक, तर्क, व्याकरण, कर्म, ब्रह्म मीमांसा, श्रुति प्रभृतिभिर्विद्यास्थानैः लक्ष्मीगुणवर्णनं तत्तद्रूपणमुखेन कृतं विद्यास्वरूपत्वाच्छ्रियः विद्येति

नामधेयवत्वाच्च । 'अर्थोविष्णुरियं वाणी' ति हि स्मर्यते । वाक्छब्दितत्वमस्याः पूर्वमेवोपपादितञ्च । लक्ष्म्याः गुणप्रकाशकाः निरूपिताः । 970 तमे श्रीकटाक्षादपवर्ग प्राप्तिप्रार्थना सम्यक्कृता ।

24. निर्वेदस्तबके - 'अहो मे महती याता निष्फला जन्मसन्ततिः--' इत्याद्यनुसारेण कविः स्वीय सर्वविधापचाराननादिकालादाचरितान्स्मृत्वा भीतः भृशं दूयन् श्रियमेव तत्क्षान्त्यर्थं शरणयन् अभ्यर्थयते । अत्र 998 तमः श्लोकः अनुसन्धेयः ।

25. शरणागतिस्तबके चान्तिमे कविः साङ्गप्रपदनं लक्ष्मीलक्षितवक्षसि तत्पुरुषकारपूर्वकं अनुतिष्ठति। (1011) तमे श्लोके ग्रन्थोपसंहारे अस्य ग्रन्थस्य, 'श्रेष्ठाः शिरः कम्पिनः' इतिवत् भगवतस्तल्प भूतः फणिराजः शेष एव स्वयमामोदितेति उत्कर्षं व्यञ्जयति ।अस्य सदृशं पारितोषिकं भगवतापि दातुमशक्यमिति 1013 तमे निगमयति । इति स्तबकार्थसंग्रहः ।

अन्यदप्यत्र ग्रन्थे श्लाघनीयोंशः विद्यते यदेते कवयः बहुत्र लौकिक न्यायान् सुभाषितानि चोत्प्रेक्षन्ते । अत्र निदर्शनार्थं केचित्प्रदर्श्यन्ते - 'भ्रातृश्रियं सह भुवः परिबिभ्रतीति' (37), 'सह दयिततमेन स्वैरकेळौ सतीनां नखलु निजशिशूनां सन्निधिर्व्रीड हेतुः' (49), 'तच्छेषत्वं कथमितरथा देवि तुल्येपि भूम्नि? (94) 'नीहारो नकरस्थमम्बरमणेः लीलाम्बुजं बाधते' (145), 156 तमे 'यस्यास्ति वित्तं' - इत्यस्य रूपणं, 'सन्तोपि वेलामतियन्ति रागतः' - (176), 'गणयति न फलार्थी गौरवं लाघवं वा' (177), 'नरः कुशलमश्नुते न खलु साहसिक्याहते' (183), 'कार्यार्थिनो हि पुरुषस्य कुतोवलेपः?' (202)'' 'मलिनैकसख्यं प्रायेण देवि कुटिलप्रकृतेस्स्वभावः' (220), 'दध्यान्नूनमनेनसां हि कलुषं मिथ्याभिशंसञ्जनः' (241) 'छन्दानुवर्तनकृतः कुटिलस्य सर्वे' (253) 'विपक्षाणां पक्ष्यीकृतिरपि विषादाय भवति' (259), ''तुष्ट्यै विशिष्य किल शिष्यगिरो गुरोस्स्युः' (393), 'द्वयोरेकत्रेच्छा जनयति मिथो द्वेष मधिकं'(416), 'नापन्नपात्रार्पणतो हि नार्थः' (419), 'शतमन्धाः किमवेक्षितुं

क्षमन्ते?' (422), 'प्रतिषेधन्ति हि बालसख्यमार्याः' (428) 'यद्वस्तु यद्गुणवता कलितानुषङ्गं तत्तद्गुणी..' (429), ''वैरं हन्त विरोधिनोः किल मिथो जन्मान्तरेप्यक्षतं' (467) 'कर्तृत्वं क्रतुषु न केवलस्य पुंसः' (511), 'मातृद्विषस्त्रिभुवने महती हि गर्हा' (515),' 'गुरुतरमयः पिण्डं गर्वान्निगीर्णमहो रमे किमु जरयितुं शक्तं शुण्ठीकषायनिषेवणं?' (549), 'कार्योद्यमोपि महतां कमले शिवाय' (703), कान्तः प्रियां वहति कामवशात् दृशि' (718), 'रवेररुजमाप्नुयादिति न पूर्वभाषा मृषा' (801), 'सति बलवदालम्बे स्याद्दुर्बलोप्यकुतोभयः' (813). 'लेढुं डाडिमकल्परत्नखचितं राज्ञः किरीटं रमे किं वा सर्वदुरासदस्य दयिताकेलीशुकस्त्रस्यति?' (820), देवतान्तरपरिसंख्या स्तबके विविधनयानाविष्कृत्य लक्ष्म्या एव सेव्यतमत्वं व्यञ्जितं, 'शक्तिरुदेति कारणगता प्रायेण कार्येष्वपि' (872) 'नैराश्यमेव हि सुखं निगदन्ति सन्तः' (973) 'बद्धः स्वयं किमु विमोचयिता बतान्यं?' (1006). इत्यादयः। एवं ग्रन्थस्यास्य अतिशयान्तरानाविष्करणे मन्मतिमान्द्यमेव निदानमिति न तत्र ग्रन्थकृतापराद्धं किमपि।

श्रीमच्छ्रीनाम भूमाद्यनघगुणगणाविष्कृतौ तत्परं यत्<br>
हृद्यं श्रीवेङ्कटाध्वर्यभिध कविवरोपज्ञ लक्ष्मीसहस्रं।<br>
नानाश्रुत्यन्तघुष्टं मधुरिपुमहिषी वैभवं द्योतयत्सु<br>
ग्रन्थेष्वग्र्यां स्थितिं तत्प्रभजति जयतादार्कचन्द्रं निकामं।।

विंशाः पञ्चोत्तरास्तु स्तबकमयविभागाः पुनश्च क्रमात्ते<br>
प्रारम्भाविर्भवोरस्स्थल वसति दयायुक्कटाक्षप्रयत्नाः।<br>
सन्माङ्गळयश्च सौन्दर्ययुतसरस श्रृङ्गारकैश्वर्यरूपाः<br>
क्षान्त्याख्योथोत्सवश्च प्रथितइह तथासौ वदान्याभिधोपि।।

पश्चादेषां पुनस्ते यमक रुचिर नक्षत्रमालासमेताः<br>
चारित्रंचित्रयुक्तं विभवविषयके नाम धाम्नोरथातः।

भीताभीति प्रदानन्त्ववर सकल देवान्तराणां प्रसंख्या
रूपादानं दशानां विविध बहुल सच्चित्र सङ्कीर्णकाश्च ।।

निर्वेदाख्यस्तथायं शरणवरण नामान्तिमः पञ्चविंशः
युक्तञ्चैतैः प्रबन्धं कमलवसति सत्ख्यात माहात्म्यवादि ।
पद्यानां मञ्जुलानां दशशत सहितं यत्त्रयोदश्युपेतं
प्राकाश्यं तत्तु नीत्वा रघुवर सहजो दास इत्थं सिषेवे ।।

एवं बहु विस्तृतं, अनर्घार्थरत्नगर्भं अतिमनोहर, उच्चारणमात्रादपि लक्ष्मीकटाक्ष (कटाक्षलक्ष्म्याश्च) संपादकं ग्रन्थरत्नमिदं लक्ष्मीसेवा धुरीणैः श्रीमद्भिः नारायण महोदयैः कृष्णाभिधैश्च महनीयैः अर्थितोहं स्वयं प्रयोजनतया भागवतानुज्ञाकैङ्कर्यत्वेन च सादरं बहुमत्य प्राचीन जीर्णकल्प ग्रन्थाक्षर मुद्रित सव्याख्य ग्रन्थान्मूलमात्रं पृथक्कृत्य देवनागरी लिप्या दुर्मति संवत्सरे एकदा अलिखं। अथापि तस्य मुद्रणादि सौकर्यार्थं पुनर्लेखनं आकाङ्क्षितं। तदपीदानीं निर्वृत्तं। एतास्मिन्नन्तरे निर्दिष्टपूर्वाः महाभागाः बहुवित्तव्ययायाससाध्यस्यास्य मुद्रणकार्यस्य धूर्वहान्वेषणे संततं बद्धश्रद्धाः रामानुजसेवानिरतानां तन्नाम्नैव समितिमेकां सञ्चालयतां तिरुनारायणार्याभिधानां महाभागानां साहाय्यं अवलम्ब्य नवीनयन्त्रोपकरणसहायेन इमं मुद्रणकार्यं आरचितवन्तः इति तेषां बहुतरां कृतज्ञता आवेदनीया। मुद्रणे चास्य ग्रन्थस्य प्रथमं हस्तलिखितात् कृतेरस्याः गणकयन्त्रसहकृत लेखनयन्त्रे संस्कृताक्षरैः मूलं संयोजितं। ततः तच्छोधनादिरकारि। अथ तस्य मुद्रणार्थं छायाग्रहणयन्त्रयुत मुद्रण यन्त्रे मुद्रणार्ह (ब्रोमैड) पत्रे तन्मुद्रणं कारितं। एतस्य छाया पत्रं गृहीत्वा तदुपयुज्य सहस्राण्यपि पत्राणां सलीलं मुद्रितुं शक्यन्ते। एषः क्रमः यद्यपि बहुव्ययसाध्यः तथापि मनोज्ञं पठन सौकर्ययुक्तं दोषरहितं च वर्तत इति सफल एव व्ययोस्येति मन्ये। विषये चात्र प्रेक्षावन्तो भवन्तः एव प्रमाणं।

यद्यप्यस्मिन्कैङ्कर्ये चापलात्केवलात् उद्युक्तोऽहं निवेदिकाया एतस्याः लेखने, तथापि तस्य सदोषत्वे क्षमां, सगुणत्वे प्रसादञ्च सन्तः कुर्युर्मयीति दृढं विश्वसिमि।

'वक्ता श्रोता वचनविषयः प्रीयतां श्रीनिवासः'।

इति शम्॥

प्रभव संवथ्सरस्य सिंहमासि<br>
कृष्ण अष्टमी दिवसे<br>
कल्याणनगरे.

इति सविनयमावेदयति<br>
लक्ष्मीतद्दासदासः<br>
शोकहर्तृपुराभिजनः रामानुजदासः

श्रीः

# लक्ष्मी सहस्रम्

## 1. प्रारम्भ स्तबकः

1 लक्ष्मी चरण राजीव लाक्षा लक्षित वक्षसे ।
विश्व सर्गादि लीलाय वेंङ्कट ब्रह्मणे नमः ।।

2 असदृशमरुणाब्जदृशं प्रस्विन्नपयोधर स्फुरन्मूर्तिम् ।
मनसि दधीमहि सततं मातारं मातरंच लोकानाम् ।।

3 प्रातरम्बुज विडम्बिलोचनां मातरं त्रिजगतामुपास्महे ।
शीतरम्य करुणावलोकनैः या तरङ्गयति मङ्गळानि नः ।।

4 आचक्रायुधमाच मामकगुरोः आचार्यवर्गं भजे
मध्यस्थैरिह नाथ यामुनमुखैर्मान्यैस्सनाथीकृतम् ।
क्षीराम्भोधिसुता पयोधर पयः पूरा इवोदित्वराः
यद्वाचां विसरा जगन्ति नितरामुज्जीवयन्ति स्वयम् ।।

5 भुवनजननीन्तुष्टूषन्ती पुरोरसनाऽधुना
रचयति नमो वाचे प्राचेतसानन जन्मने ।
जनकतनया दिव्योदन्तामृत द्रव वर्षिणीं
जगति कवयः श्राव्यं काव्यं गृणन्त्यवलम्ब्य याम् ।।

6 पराशर मुनीशितुः प्रणातिकर्म कुर्मस्तरां
अहीन गुण शोभितै रमृत साधनोत्कण्ठिभिः ।
यदीय कृति सिन्धुना विमथितेन यत्नाद्बुधैः
प्रकाशमिह नीयते परम पूरुष प्रेयसी ।।

7 दद्यादद्य कुदृष्टि सर्प गरुड स्त्रय्यन्त विद्या गुरुः
श्रीमान्वेङ्कट नाथ देशिकमणिः श्रेयांसि भूयांसि नः ।
दत्से दृष्टिलवेन देवि भजतां या त्वं विभुत्वं रमे
तस्या हन्त तवापि येन विभुता सुष्ठु प्रतिष्ठापिता ।।

8 शीतज्योतिः शिखरि नगरी सागराम्भोधरादेः
जल्पं जल्पं जलधि तनये हन्त मिथ्या समृद्धिम् ।
निर्विण्णा मे ननु भगवती भारती यं त्वदीयं
स्तोत्रं चित्रं स्फुरति जननि स्वैरमारब्धुकामा ।।

9 मदान्ध क्षोणीपत्यपशद मनः प्रीणन कृते
नमस्कारान् ब्रूमो भगवति चमत्कारवचसे ।
विधात्रीमानन्दं विपुलमिह चामुत्रच तव
स्तुतिं प्रस्तौत्वंहो भरनिरसनायाद्य रसना ।।

10 तत्तादृग्रचना विदग्धरसना कण्डूति निर्धूतये
केचिन्नीच विचार गोचर गिरो गृध्नन्ति मिथ्याकृतिं ।
स्वं वाग्ब्रह्म पुराण जिह्मग शिरः कम्पावहं पावनी
कर्तुन्देवि वयं पुनस्तव कथारम्भाय जृम्भामहे ।।

11 शय्याशब्द गुणानुशासन चणा छन्दोमयं वाहनं
सोदर्यस्तु कलानिधिस्तव रमे सूनुश्च वाणीपतिः ।
तस्यास्ते पुरतः स्तवं मितमतिः प्राज्ञोचितं श्रावयन्
गुञ्जाविक्रयिणः श्रयामि पदवीं माणिक्य पुञ्जापणे ।।

12 कवीनां प्रत्नानां कबळित सुधास्वादिमम्दैः
अनूचीनैः स्तोत्रैः श्रुतिजडिम भाजो जननि ते ।
अजामित्वायैव स्तवमिममकूपार तनये
वियाता ग्रथ्नीमो विहसन पदैः कैरपि पदैः ।।

13 विद्वद्भ्यः स्वदमानया यदनया विश्वाम्ब नाधीयते
स्तुत्या ते सुखमङ्ग चेतसि दृषत्प्रायेनदूये ततः ।

गान्धर्वीहि पुरन्दरादि शिरसा मान्दोळयित्री चिरं
गीतिस्सा बधिरान्न नन्दयति चेत् किं छिन्नमेतावता ?

14 वक्तुं नैव चतुर्विधा श्रुतिरसावीष्टे न चाष्टश्रुतिः
नो चक्षुः श्रुतिरप्यहो तव गुणान् नारायण प्रेयसि।
स्तोतुं त्वामपि तामहं व्यवसितो दूरं हनूमन्मुखैः
दुर्लङ्घं जलधिं तरीतुमनसः पङ्गोर्दधे चापलम्॥

15 गर्वद्दुर्वसुधापति स्तुति पर व्याहार कूहान्धता
निर्विण्णाशय एष वेङ्कट कविः पङ्केरुहावासिनि।
अद्य त्वद्गुणवर्णनामृत रसैरानन्दितुं जृम्भते
चिञ्चा पर्ण रसावसन्नरसनः पुण्ड्रेक्षुसारैरिव॥

16 नाहं जाने नवरसगतीः नार्थमक्षुण्णमन्यैः
नालङ्कारानपि च न वचोगुम्भ गम्भीरिमाणं।
स्तोतुं मातस्तदपि भवतीं त्यक्तलज्जो यतेऽहं
मन्तुं किन्तु प्रथित करुणा क्षन्तुमर्हस्यमुं त्वम्॥

17 चक्षुष्मन्तः चरण कमले चक्षुषा श्रोत्रवन्तः
श्रोत्रे भूमेः जननि जगतां जन्मवन्तोऽपि न स्मः।
वक्त्राण्यासन् भगवति न षट् पञ्च चत्वारि वानः
कस्मादस्मान्न हसतु जनः स्तोष्यतः त्वद्गुणौघम्॥

18 अभूमिस्त्वद्भूमा जननि जरतीना मपि गिरां
असौ कस्मादस्मादृश कृश मनीषोक्ति विषयः।
अशक्यानां और्वाग्निभिरपि निपातुं निधिमपां
अपारं तं पातुं मशक शिशुकः किं प्रभवति? ॥

19 प्रकृष्यन्तामस्मत्पर मितर काले विधि मुखाः
वयं मातस्ते वा तव नुति दशायां सममधियः।
निकर्षोत्कर्षौ स्तां निशि तु शशि खद्योत महसोः
दिवा को वा भेदः दिनकर कर व्रात जटिले॥

20 वाग्भिः कोरकितानि ते रचयतः स्तोत्राणि वाणीपतेः
अस्माकं सुमितां स्तुतिं कलयतां अप्यम्ब तुल्यं फलं।
कौबेरीं श्रिय मानशे बहुतरैः कश्चित्तपोभिश्चिरात्
एनामाशु कुचेल एव जगृहे धाना प्रदानादपि।।

21 आसन् धन्यतमाः गुणांस्तव बहूनास्वाद्य शक्रादयः
गृह्णन्तोऽपि गुणार्णवामृत कणान्मातः कृतार्था वयम्।
आचामन्ति सुधाझरान् सुमनसः द्वित्रांश्चकोराः करान्
नैणाङ्कानविशेष मार्ति शमनं तत्रोभयेषामपि।

22 देवि श्रीवृषशैल देव दयिते दाक्षिण्य पुण्य क्षिते
मातस्साहसतस्तवस्तव मिमं कर्तुं प्रवृत्तस्य मे।
उन्मीलन्तु परं गिरस्तव करालङ्कार पङ्केरुह-
प्रेङ्खत्तुङ्ग षडंघ्रि संघ विसरज्झङ्कार शंकाकराः।।

23 पद्यानां दशभिः यदस्तुत शतैः त्वत्प्रेयसः पादुकां
त्रय्यन्तार्यगुरुः परो हयमुख स्तत्राम्ब को विस्मयः?।
स्तोक प्रज्ञमतीव मूकमपि मां श्लोकैः सहस्रेण ते
स्तोतारं समवेक्ष्य सूक्ष्म मतिभिः कस्मान्न विस्मीयते?।।

24 मन्ये सत्स्वपि वाङ्मयेषु विदुषामन्येषु धन्यैः बुधैः
उक्ति र्मे भुवि देवि तावक गुण स्पर्शा दुपादीयते।
भद्रे त्वद्रमण प्रशस्त चरण द्वन्द्वैक संसर्गतः
भर्गः स्वर्गधुनीं बिभर्ति शिरसा भूयस्सु सत्स्वम्बुषु।।

25 तव स्तोत्रे मन्दाः कतिचिदति चित्रेऽपि कमले
न विन्दन्त्यानन्दं यदि तदपि न म्लायति मनः।
सृजेदेव स्रष्टा स किल विपुलेऽस्मिन् क्षिति तले
चमत्कारानन्दानुभव चतुरान् द्वित्रिचतुरान्।।

26 सुचारु मधु वीचिका रस मुचो वचो देवता
कुचामृत कचाकचि प्रथन चातुरी मेदुराः।

नरास्सतत मिन्दिरा गुण कथा सुधादोहिनीः
उपाध्वमिह वेङ्कटाध्वरि कवे रुदारा गिरः ।।

27 स्वैरं प्ररोहयतु पद्यसहस्रमेतत्
दासस्य मे वदन सीम्नि तवाऽवलोक
यः क्वापि हन्त सकृदञ्जलि बन्ध भाजि
जन्तौ जगज्जननि सौति सहस्रमक्ष्णां

28 पङ्कजनिलये स्तोत्रं वेङ्कट कविगीत मेतदविगीतं ।
किङ्कर कृतमिति कृपया त्वङ्कलयितु मर्हसि प्रसीदन्ती ।।

29 रसिकालिभिरास्वाद्यं रम्यं श्रीकर विलसदलङ्करणं ।
विकसतु सूर्यालोका त्पद्य सहस्रं सहस्रपत्रमिव ।।

## 2. प्रादुर्भाव स्तबकः

30 भजे दुग्धाम्बुधिं यत्र परिष्कर्तुं हरे रुरः ।
कठिनं सुकुमारं च रत्नं प्रादुरभूत् द्विधा ।।

31 चतुर्मुखादीन् जगदम्ब डिम्भान् दुग्धैः बहून् वर्धयितुं समृद्धैः ।
पयः पयोधेः भवती दयालुः सत्यं प्रजज्ञे सह कामधेन्वा ।।

32 त्वयोज्ज्वलदुग्ध पयोधि मध्ये महो द्वयं देवि सहोदियाय ।
हरेरुरोभूषण मेक मासीत् अन्यच्छिरो भूषण मष्टमूर्तेः ।।

33 जीवं जीवं प्रत्युदारां समृद्धिं कर्तुं हर्तुं कञ्ज धामे तमांसि ।
सर्वं त्रातुं सत्कदम्बं पुराब्धेः चान्द्री मूर्तिः जायते तावकी च ।।

34 विश्वासेचनकं मुखं तव पयः सिन्धो रुदञ्चत्तदा
शङ्कित्वा विगळत्कळङ्क मपरं चन्द्राङ्कुरं शङ्करः ।
न्यस्तं मस्त पदे विधुं प्रथमतो नूनं भृशं नून इति-
अम्ब भ्रंशयितुं स्तुवन्निव शिरः कम्पं रमे निर्ममि ।।

35 दातुं त्वां पुरुषोत्तमाय तनयां पद्मे गृहीतव्रतः

प्रासूत्कामगवीं मुदे सुमनसां पानीय मप्यम्बुधिः ।
कञ्चित् समि मनुत्तमं मघवते कल्पद्रुमं चेष्टदं
सर्वज्ञाय सितांशुकं धृतजटावर्गाय दिग्वाससे ।।

36 हृर्षादब्धेरमृत कलशं त्वाददे देवसंघः
श्रीमानुच्चैश्श्रवस ममर क्ष्मापतिः चन्द्रमीशः ।
तेषामेकं न किल जगृहे त्वां शुभामेव शार्ङ्गी
पद्मे सारग्रहण निपुणः पारिशेष्या द्गृहीतुम् ।।

37 छायामुखे जननि चान्द्रमसी तवासीत्
कल्पद्रु पल्लवरुचिः करयोः पदोश्च ।
सौधारसी वचसि सम्पदतो न मिथ्या भ्रातृश्रियं
सहभुवः परिबिभ्रतीति ।।

38 सुधादयस्सन्तु तथापि तोयधिः ध्रुवं भवत्यैव भवत्यपत्यवान् ।
गुणा रमे जाग्रतु विक्रमादयः गुणी महोदारतयैव भूपतिः ।।

39 भ्राम्यत्पन्नग वक्त्रकोटरमरुन्नुन्नोर्मि सङ्घट्टना
झटित्योर्ध्व विसारि दुग्धकणिका निष्पन्न पुष्पाञ्जलिः ।
सिन्धुर्मन्थ वसुन्धरा भृदुदयद्धुन्धुं ध्वनिच्छद्मना
स्तुत्वा माधवमद्भुतामलभत त्वामम्ब कन्यामणिं ।।

40 सिन्धुक्रोडस्थपुट विलुठन्मन्थ लब्धावतारैः
धुन्धुङ्कारैस्त्वदुदय महे दुन्दुभि श्रीमति श्रीः ।
प्राञ्चो झञ्झानिल पटु नटोन्नाटित प्रौढ वीची
वल्ली हल्लीसक मकलय न्नन्तरुल्लीढ हर्षाः ।।

41 बर्हं भ्रान्त्वा चिकुरमुदधेरुद्भवन्त्या भवत्या
बद्धा मन्थक्षितिभृति सुरैः पन्नगाः स्विन्न गात्राः ।
तत्कालैकोचित मतिजुषः त्रासत स्त्यक्त चेष्टाः
राजीवाक्ष प्रणयिनि भृशं रज्जुता मभ्यनैषुः ।।

42 आलोक्य तत्र भवती मवतीर्ण रूपां
वृष्टामुदा सुमनस स्सुमनः प्रधानैः ।

पिण्डी भवद्भि रखिलाम्ब पयः पयोधेः

डिण्डीर खण्ड निवहैः सममाप्लवन्त

43 अम्ब स्वयं त्वयि चिरादवतीर्णवत्यां

मन्थश्रम व्यपनयाय मखाशनान

श्रान्ताहि रज्जु कबळीकृति शङ्कयेव

क्षीरोद रोधसि शनै रनिल श्चचार

44 सान्द्रोत्कण्ठा मसृण मधुजित्सादरापाङ्ग धारा

सध्रीचीभिः श्वसन विसर दुग्ध वीचीभि रब्धिः।

उद्वाहाख्यं कमपि भवती मुत्सवं लप्स्यमानां

मातस्तातो मधुरमनय न्मङ्गळं स्नान कर्म॥

45 सुधोदधि समुद्भव त्सुरतरु च्छटान्तगते

मनोज्ञ मणि मण्टपे महति रत्न सिंहासने।

स्थितां मणि सरोरुहि त्रिदशसुन्दरी सेवितां

जयाय भवतीमहं जननि सन्ततं चिन्तये॥

46 अभ्यर्ण स्फुरदप्सरः कर धृतैः उद्दाम दुग्धाम्बुधिः

स्वैरोत्सृत्वर वीचिका सहचरैः संवीजितां चामरैः।

हस्तालङ्कृत पङ्कजामभिनवाकल्पैरनल्पैः शुभां

अम्ब त्वामुषसि स्मरामि जगता मातङ्ग कूलङ्कषाम्॥

47 भूयासुस्ते त्वदीया मयि हरि दयिते स्थूल लक्षाः कटाक्षाः

यल्लिप्सा व्यग्र भर्गाद्यमर विरचितै रञ्जलीनां प्रपञ्चैः।

मन्थाद्रिक्षोभदुःस्थं कलशजलनिधेः मध्य मुत्सृज्यवेलां

प्राप्तैरजे सरोजैरिव नवरजनी नायकालोक मूकैः॥

48 अग्रे मुरारे ररविन्द पीठे हरित्करीन्द्रै रभिषिच्यमानां।

अवेक्ष्य पुत्री मखिलेश्वरीं त्वां आनन्द सिन्धौ निममज्ज सिन्धुः॥

49 प्रसभमुदधिकन्ये पश्यतां दैवतानां

परमपुरुष वक्षः पीठ माढौकथास्त्वं।

सह दयिततमेन स्वैर केळौ सतीनां

नखलु निजशिशूनां सन्निधि र्व्रीडहेतुः ।।

50 कलित कलश सागरोर्मिगंगं कमपि मुकुन्द महः कलिन्दजौघम् ।
कनक सुहृदभूषयत्तवाभा विततिरतीव रमे सरस्वतीव ।।

51 द्युनदी शिशिरं शिरः पुरारेः भजतीन्दु र्भवती दयारसार्द्रं ।
हृदयं मुरहर्तु रब्धिजे वां उचितैव स्थितिरुद्भवानुरूपा ।।

52 कमले तोषयितुं त्वां कान्त भुजान्तर निशान्तमुपयान्तीं ।
प्रायच्छदूर्मि हस्तैः प्रत्नं रत्नगणमम्बुधिर्हरणम् ।।

## 3. वक्षस्थलावस्थानस्तबकः

53 श्रये शेषाचल मणेः शार्ङ्गिणो हृदयङ्गमाम् ।
अनुकम्पामिवाकम्पां अम्बामम्बुज वासिनीम् ।।

54 कल्याण दिव्य करुणादि गुणाम्बुराशे
काङ्क्षाधिकाभ्युदयदायि कटाक्षलेशे ।
भद्राय दैत्यजिदुरः कृतनित्यवासे
भक्तिस्थिरेण मनसा भवतीमुपासे ।।

55 नाळीक सम्भव भवादि सुराभिवाद्ये
नानाविधाकृतक वाङ्मय मौळिवेद्ये।
पाथोधि पुत्रि पति वक्षसि नित्य हृद्ये
भान्तीमनन्य शरणो भवतीं प्रपद्ये ।।

56 शय्यागृहं तव पिता जगतां नियन्तुः
भ्राता हगेक इतरः पुनरङ्ग भूषा ।
वक्षस्यमुष्य वरदे त्वमवस्थितातत्
वाल्लभ्यमम्ब भवदीय मनन्यलभ्यम् ।।

57 भ्रातुर्विधो र्वसु समृध्यसहेषु पद्मेषु
आस्ते रमे त्यपयशः प्रशमाय नूनं ।

सोदर्य कौस्तुभ शुभावह मब्धिकन्ये

वक्षस्त्वमावससि वेङ्कट नायकस्य।

58 भगवतः प्रतिघो हृदि मा स्म भूत् समुदयद्वृजिनेषु जनेष्विति।
अवहिता जगदम्ब हिताय नः हृदयमेव हरे रधितिष्ठसि।।

59 फणि शैल पते स्त्वमिन्दिरे भवसि प्राणसमेति साम्प्रतं।
अमुना भवती यतस्स्वयं हृदये प्राणपदे निवेशिता।।

60 उरगाद्रि पते रुरः स्थलस्था कमले तद्दळ शङ्खगर्भ मुक्तैः।
शुचिहार महस्सुरस्रवन्ती सलिलै रम्ब सदाऽभिषिच्यसे त्वं।।

61 कुमारि क्षीराब्धेः कुसुम सुकुमाराङ्गि भवती
नवं पद्मं सद्म प्रदिम रमणीयं विजहती।
शरण्ये त्रातुं नः शरकिण घनं कौस्तुभ शिला
कठोरं गाढोरः श्रयसि कृपया कैटभरिपोः।।

62 श्रीवत्साङ्कं चिरतर मुरस्सीम गोष्ठं मुरारेः
अध्यासीना मनघ हरितोदार कान्त्याभिरामम्।
कल्याणि त्वां सुलभ ममृतं संश्रितानां दुहानां
क्षीराम्भोधेः समुदितवतीं ब्रूमहे कामधेनुम्।।

63 विश्वातीतो जयति वृजिन ह्रासदे वासुदेवः
पद्मे तस्याप्युपरि महिमा भासते तावकीनः।
क्षेत्रज्ञानां हृदयमनिशं कञ्जनाभोऽधिशेते
तस्यापि त्वं हृदि हृततमो राजसे राजसे यत्।।

64 वीक्षन्ते ये वेङ्कट क्ष्माभृदिन्दोः सूरस्थाने शोभमाना मिह त्वां।
दुग्धोदन्वत्पुत्रि दिव्यं पदं ते सूरस्थानं हन्त भित्वा विशन्ति।।

65 बलिवसु मुषः प्रहर्षादुचोरस्थल मुपेत्य कमले त्वं।
अस्माकमपथगानां हरसे चिरकाल सञ्चितानर्थान्।।

66 शशिरेखा भवती च श्रीरब्धेरुद्गते तयोराद्या।
धारयति कृष्णमन्तः कृष्णेनान्तस्तु धार्यते चरमा।।

67 वनमालायामुषितां विश्वविभो र्भुज तमाल विटपान्तः ।
कामपि कनकलतां त्वां कलशाकूपार कन्यके मन्ये ॥

68 परमतुळसीतमनघे वनमालामं सुलक्ष्मणाकलितं ।
कलयसि सद्रूपयुतं कमले वक्षो हरेर्महारामम् ॥

69 दृष्टात्म प्रतिबिम्बितेषु मणिषु द्रागिन्दिरे मा स्म भूत्
अन्तस्तेष्वबलान्तरस्थितिधिया कोपस्तवेत्यच्युतः ॥
शङ्कोन्मेषकथापथातिपतितं सन्त्यक्त रत्नान्तरः
तं त्वत्सोदरमेव कौस्तुभमणिं धत्ते भुजाभ्यन्तरे ॥

70 सस्नेहपूर्तिरुदित त्रिदशोपसेवः दीप्तो हरेरुरसि देवि तवेष्टगेहे ।
अस्माक मान्तरतमः प्रशमय्य मुक्तेः
मार्गं प्रकाशयतु कौस्तुभरत्नदीपः ॥

71 सरसिजनिलयापि वैभवेन स्फुरसि निरेनसि मानसे मुनीनां ।
उरसि मुररिपोरुपोढहारे शिरसिच देवि गिरां पुरातनीनाम् ॥

72 शुभश्रीवत्साङ्कं शुचिरुचिर हारं मुररिपोः
तमालाभं वक्षस्तरळवनमाला सुरभिळं ।
परिष्कुर्वाणां त्वां भव जलधि शोषाय कलये
जगन्मातः प्रातस्तन जलज दायाद वदनां ॥

73 प्राचीन वाक्परिषदां परतत्वचिन्तां
व्यालेन्द्र भूधरपतिः व्यपनेतुकामः ।
कान्तो बिभर्ति भवतीं कलशाब्धिकन्ये
भूषाविशेषमिव देवि भुजान्तराळे ॥

74 स्वभावादुन्मील द्वकुळ सुमनः कोमळतनोः
तव क्लेशाशङ्काकुलित हृदयेनापि हरिणा ।
त्वदाक्रान्ते हन्त व्युदसितुमुरस्यम्ब पुळकान्
अशक्यं ते पद्मे न खलु सुलभः कण्टक जयः ॥

75 निरत्ययं नीलमहो निधानं कान्तं मुकुन्दाभिध मिन्दिरे त्वं ।

निरञ्जनैरेव जनै र्गृहीतं वीक्ष्य स्थिता वक्षसि रक्षितुं किम्? ॥

76 जननि पुष्यसि तामरसं पदं वितनुषे च नतामरसम्पदं ।
परमुर स्फुरण प्रतिरोधिनं परमुरस्स्फुरगन्नयसेऽद्भुतम् ॥

77 यदि नाम विष्णु वक्षः क्षणमत्यक्षः क्षमामयि रमे त्वं ।
आगस्विनस्तदानः नैवारक्षिष्यदूष्मळो नाथः ॥

78 हृदये कमलदलाक्षि त्वत्पदलाक्षीय लक्ष्म भवतीञ्च ।
दधदूष्मळोऽपि कृष्णोऽप्यधिकारुण्यं वहत्यहिगिरीशः ॥

4 कारुण्य स्तबकः

79 भजे भुजङ्ग शैलेश भुजान्तर परिष्क्रियाम् ।
तनयां दुग्ध जलधेः दयामिव कृतोदयाम् ॥

80 जननि जीवयितुं जगदर्दितं दशमुख प्रमुखैः त्रिदशारिभिः।
जनक यज्ञ मही जठरे जनिं कृतवती भवती कृपया रमे ॥

81 अकरुणा करुणा ध्रुवमम्ब ते क्षितितले भवती मवतार्य या ।
अहहयातुपुरस्थिति वेदनां अगमयज्जगदार्ति निवृत्तये ॥

82 अविरत विविधापराधकारि ण्यपि मयि देवि दयां करिष्यसीति
जननि मम भयातुरस्य धैर्यं जनयति वायसदानवापदानं ॥

83 राघवस्य हृदयं स्थिराघव द्वायसं प्रति न वायस क्रमं ।
देवि जानकि दयारसात्त्वया पादयोजन कृताद्रवी कृतम् ॥

84 अब्धेः कन्ये जननि महता मागसां जन्मगेहेषु
अस्मादृक्षेष्वपि च करुणामादधासि ध्रुवं त्वं ।
साक्षी तस्मिन् युधि दशमुखे सारसाक्षि व्यपेते
यातुस्त्रीणां कबळन विधिं याचमानो हनूमान् ॥

85 रामस्तिष्ठतु नाम योनविद यो जिह्रेति निर्हेतुकं
सुग्रीवैकविरोधिनं क्षितिसुते संहृत्य तं वालिनं ।

कारुण्याम्बुनिधि स्त्वमेव नियतं क्ष्मात्मपीडं यतः
रक्षस्त्रीनिकरं ररक्षिथ तमप्यार्द्रागसं वायसम् ।।

86 गुरुणा प्लवेन करुणात्मना विना हरिणाङ्क सोदरि गुणाम्बुधे तव ।
जननाधिरोग मरणादि वेदना वरुणालयस्य तरणाय का गतिः ।।

87 त्वय्येवायतते कृपा रघुपते र्देवस्य सत्यं यतः
वैदेहि त्वदसन्निधौ भगवता वाली निरागा हतः ।
निन्ये कापि वधं वधूस्तवतु सान्निध्ये त्वदङ्गव्यथां
कुर्वाणोप्यवितः पतन्नशरणः काको विवेकोज्झितः ।।

88 द्विपञ्चग्रीवाज्ञा चकित समुदञ्चन्निशिचर-
प्रपञ्च प्रक्षिप्तः पवनसुत वाले हुतवहः ।
यतो जातश्शीतस्तमिह भवसन्ताप विवशे
कृपापूरं स्वैरं किरतु मयि लोकाम्ब भवती ।।

89 विष्णावुष्णांशु वंशं गतवति विबुधद्वेषि शोषाय रोषात्
एष्यत्तद्योषिदागश्शतमपि कृपया क्षन्तुकामेव नूनं ।
धत्ते कन्या जनन्या गुणमिति निपुणं किंवदन्तीं विदन्ती
पूर्वं सर्वं सहाया मुदयमकुरुथा भोगिशैलेन्द्र कान्ते ।।

90 अवितुमिह दया ते देवि मार्गत्यशक्तान्
अहमपि शरणार्थी हन्त मज्जन् भवाब्धौ ।
घटनमुचित मासीदावयोर्दैव योगात्
कलश जलधि कन्ये हातुमेतन्नयुक्तम् ।।

91 कार्येषु कारण गुणाः नियतं भवन्तीति
उक्तिं सता मवितथा मवधारयामः ।
चान्द्री कला च भवती च पयोधिमध्यात्
जाते यदम्ब सुधया दयया च शीते ।।

92 आसादितोन्नतपदेषु गिरीश मुख्येषु
आरोढुमब्जनिलये शिथिलाभिलाषा ।

नीचे तु मादृशि दयारसनिम्नगा ते

प्रामादरा प्रवहतीत्यनुरूपमेतत् ।।

93 शौरिश्चकास्ति हृदयेषु शरीर भाजां

तस्यापि देवि हृदयं त्वमनुप्रविष्टा ।

पद्मे तवापि हृदये प्रथते दयेयं

तामेव जाग्रदखिलातिशयां श्रयामः ।।

94 नित्यं विश्वं वशयति हरिः निग्रहानुग्रहाभ्यां

आद्ये शक्तिं विघटयति ते हन्त कारुण्यपूरः ।

ईषन्न्यूनं तदिह दयितादीशितृत्वं भवत्याः

तच्छेषत्वं कथमितरथा देवि तुल्येपि भूम्नि ।।

95 विहितं जहतं विवेकहाना दहितं कर्म च नित्यमाचरन्तं ।

अपयातगुणं हरिप्रिये मां कृपया केवलयैव पालयेथाः ।।

96 क्षणमप्यसहास्थितौ जनागः कमिता न क्षमितेति सानुकम्पा।

अवतारदशासु देवि रूपैः अनुरूपैरनुगाहसे मुकुन्दम् ।।

97 गळति कलितायासे श्वासे कफार्गळिते गळे

भ्रमति नयने भ्रान्ते स्वान्ते यियासुषु चासुषु ।

त्वरयति दया जन्तोरन्तोत्क्रमे भवतीं रमे

त्वमपि कृपणत्राणे प्राणेश्वरं च पराङ्मुखम् ।।

98 दुःखाक्रान्तं भवजलनिधिं दुस्तरं योगिवर्यैः

पापानां न स्तरितु मधुना का कथा लोकधात्रि ।

एवं यद्यप्युदयति मतिस्तावकीमब्धिकन्ये

धन्ये दृष्ट्वा तदपि करुणां धैर्यमित्यन्तरान्मा ।।

99 तपोभिरिह योगिन स्तव दया मविन्दन्त यां

अकिञ्चनतयैवताममृत सोदरि प्राप्नुमः ।

समाधि पटवः श्रमादनु भवन्ति यद्दैवतं

तदेव यमुनातटी तरुगणस्सुखेनान्वभूत् ।।

100 अपारपरिताप कृद्भवतपातपान्थावयं
प्रपामिव सुपावनीं तव कृपामुपासीमहि ।
उदञ्चित धनञ्जयः प्रभुरुदारहेतिर्यया
ययावुदधिकन्यके तपनमध्यगश्शीततां ।।

101 कंसारातिप्रेयसि संसाराब्धौ भ्रमन्ननाथोहं ।
अम्ब तव साध्वकम्पामनुकम्पान्नावमवलम्बे ।।

## 5. कटाक्ष स्तबकः

102 लक्ष्मी वदन लावण्य सुधोदधि कृतोदयः ।
कल्पवृक्षः कटाक्षात्मा कांक्षितानि करोतु नः ।।

103 क्षमाकुमारि क्षणमीक्षणं त्वं यदृच्छया न्यस्यसि यस्य जन्तौ ।
स ईक्षणानां त्रयमष्टकं वा सहस्रकं वा सहसा दधाति ।।

104 अम्ब स्तोकालोक सुधा शीकरलेशैः
अंगं जन्तोरार्द्रयसे यस्य स एषः ।
हस्तात्स्वीयाद्वारणमस्ताच्च गळद्भिः
दानाम्भोभिः पङ्किलगेहाङ्कण भूस्स्यात् ।।

105 त्वद्वीक्षणामृत कणोपि न येषु तेषां
सद्मानि जीर्णशिथिल च्छदिरामिरक्तैः ।
अभ्रच्युतैरुदक बिन्दुभिरश्रुमिश्रैः
जम्बालितानि जगदम्ब चिरं भवन्ति ।।

106 कनकशिबिकारूढाः प्रौढाधिराज्य पदे स्थिताः
कतिचिदतुलं मन्या धन्याश्चरन्ति यदिन्दिरे ।
यदपि च वहन्त्येनान् दीनाः परे फलमम्ब तत्
द्वयमपि तव स्तोकालोकान्वयव्यतिरेकयोः ।।

107 जडं मामप्यार्तं जननि शिशिरापाङ्ग विसरैः

कृपापूरस्मेरैः क्षणमिह कृतार्थी कुरु मुदा ।
ततः कोवा दोष स्तव भवति दैत्यारि दयिते
मरौ वा मेरौ वा भगवति समं वर्षति घनः ॥

108 द्वारिद्वारि दुरीश किङ्करकृतैः आतङ्कदैः हुङ्कृतैः
अप्युच्चै रतिमात्र वेत्र परुषाघातै रनुच्चाटितः ।
दुर्दारिद्र्य दशापिशाचनिचयो दूरात्समुत्सार्यते
देवि त्वत्करुणा कटाक्ष तटिनी स्नानार्जवेनाधुना ॥

109 शुचौ वंशे जन्म श्रुति नय मतिर्मातिरतुला
विकम्पा संपत्तिः विशद मविगीता च कविता ।
प्रपत्तिर्दैत्यारौ हितपरमपत्यं शुभयशः
विवर्तास्समामी ध्रुवमसदृशांतावक दृशाम् ॥

110 अलमलमनुसृत्य स्वामिनि ज्ञानहीनान्
अकलित बहुमाना नन्वहं किम्पचानान् ।
शरणमुपगतं मां चारु कारुण्यतुङ्गैः
स्नपय जननि सम्पन्नृत्तरङ्गै रपाङ्गैः ॥

111 कृतीव सुमती पतीन् कृतचटुस्तवस्सेवतां
दिशस्फुट मटाट्यतांदिशतु धातु वादे दृशं ।
जपत्वपि मनून् बहून् जलनिधेस्सुते यस्तुते
दृशामिह दयास्पृशामविषयो दरिद्रातिसः ॥

112 कृपण दशा पिशाच गणमोचन वेत्र लताः
मधुरिपु भक्ति वल्लि परिवृद्धि सुधाम्बुधराः।
हृदय तमो विमोक्ष हिम धामकराः कमले
भगवति नः पुनन्तु भवदीय कटाक्षलवाः ॥

113 उदीता दुग्धाब्धेः कुवलय परीतापशमनी
पदेविष्णो र्भान्ती रजनिचर चक्रव्यसनदा ।
दिशन्ती सार्वज्ञ्यं भजति शिरसा क्वापि कमले
शुभालोकैश्शोकं हरतु शशिरेखेव भवती ॥

114 दूराजा वसथाभिधान निरयद्वाराग्र जाग्रन्नर-

क्रूरालाप शराहति व्यतिकरं दूरान्निराकुर्वती: ।

पारावारसुते तरङ्गय मयि स्मेराम्बुजस्पर्द्धिनी:

घोरापार समस्त दुष्कृत परीहाराय धीरादृशः ।।

115 अघटित घटना पटीयसीते हरिगृहिणि प्रकटा कटाक्षरेखा ।

स्थिरवसुमवनीपकं विधत्ते जननि वनीपकमेव हन्त जन्तुं ।।

116 नयने फणीन्द्र शयनेष्टनायिके यदि नादधासि सुदिनाब्जशोभने ।

वल भेदनोपि नलभेत सम्पदं मरुतामयेत मरुतामपि स्थली ।।

117 करुणारसेन वरुणालयात्मजे म्रदिमानमेत्य यदिमामवेक्षसे ।

मलिनात्मनापि कलिना क्रियेत किं ममकिंकरोतु यमकिंकरोपि वा ।।

118 मामपाङ्गलहरी गरीयसी तावकी स्पृशतु देवकी स्नुषे ।

अन्तकस्य तु रुषा कषायिता मापतन्तु मयि दृष्टि वृष्टय: ।।

119 बन्धुरगुणे कृपणबन्धुमनपायं सिन्धुतनये तव कटाक्ष मकरन्दम् ।

इन्दुकर बृन्द जड चन्दनमही भृत् कन्दरमरुच्छिशिरसुन्दरमुपासे ।।

120 आर्तिं लुम्पत्वम्ब तवापाङ्ग सुधात्मा

गङ्गा सैषा चित्रगतिर्वर्जित भङ्गा ।

नेत्री शोषं प्रत्युत पद्मे भवमेव

प्राज्ञानां या भासितरूपञ्च विधत्ते ।।

121 उच्चकोरक नवाभ्युदयंते वीक्षितं मनुमहे मकरन्दम् ।

यत्रतल्लगति षट्पदमन्त्र: तत्र भाति शतपत्र गृहे यत् ।।

122 वीक्षितानि तव वारिधिकन्ये यत्रपालित जगन्ति लगन्ति ।

चित्रमत्र सपरत्र च देही देहिशब्द मपहाय चकास्ति ।।

123 दुग्धाब्धिकन्ये त्वदपाङ्ग भृत्या वित्ताधिपत्यादि पदाभिषिक्ता: ।

हृत्तापयुक्तास्तवदेव्य भक्ता मर्त्या जगत्यां विलपन्ति रिक्ता: ।।

124 यक्षश्रीजननचणैस्तवावलोकै: लक्ष्मिश्रीक्षयपिशुनानिरस्यमाना ।

नाळीकासनलिपिरप्यळीकलीना नाळीका भवति नृणां प्रतीपगत्या ।।

125 तवदेवि पटुर्नट: कटाक्ष: गुणवत्तालसदुच्छ्रयस्सनूनं।
नन नर्तयते सरस्वतीं य: सततं संश्रितमञ्जुळास्यरङ्गे ।।

126 भावत्कै र्भगवति कज्जळानुविद्धै: कृष्णो यै र्भवति विधु: कटाक्षपूरै: ।
तल्लेशैरधिकतस श्रियान्निदानै: मालिन्यं हरसि विचित्रमान्तरं न: ।।

127 विकस्वरामोदभरं वितन्वती पुरोवसन्तं प्रथितागमाञ्चिता ।
कटाक्षवल्ली तव माधवप्रिये प्रसौत्यनन्तं सुमिताप्यसौ फलं ।।

128 न विप्रयोगि व्यसनाय कल्पते नमार्गणानां सहते च पञ्चतां ।
भवं जवात्प्रत्युत दन्दहीत्ययं जयत्यपाङ्गस्तव चित्रमिन्दिरे ।।

129 विकचकमलशोभा विभ्रमोद्भूतिसीमा
विधुमिह सदुपास्यं तन्वती सुप्रसन्नं ।
शरदिवतववीक्षा शार्ङ्गिण: प्राण कान्ते
शमयति किल मेघाटोपमुज्जृम्भितापं ।।

130 नित्यामेव विभूतिमम्ब ददतो निर्व्याज बन्धोर्भवत्
दिव्यापाङ्गलवस्य वर्णन विधौ कोलब्धवर्णो भुवि? ।
जुष्टो दृष्टिभिरष्टभिश्च तिसृभि: प्राय: सहस्रेण वा
देवि द्वादशभिश्च दैवतगणो यस्मै चिरं तिष्ठते ।।

131 तत्तादृक्ष कटाक्षकङ्कटधर: श्री वेङ्कटाद्रीशितु:
प्राणप्रेयसि भूयसीं प्रभजते शौर्याभिमुख्यश्रुतिम् ।
सत्कीर्त्या सहसामरोत्तमजयं प्राप्तस्तवोपाश्रित:
वाग्बाणैर्नीविहन्यते क्षिति भुजान्निर्जित्य नित्य द्विष: ।।

132 यावद्भावत्क वीक्षा विशति तनुभृतामिन्दिरे मन्दिरेषु
व्यक्तंनृत्तं विधत्ते धनपति विभवादुत्तरा वित्तराजि: ।
द्वारे तारेशगौरा स्तुरग परिबृढा बन्धुरास्सिन्धुरावा
गर्वाद्घुष्यन्त्यखर्वाभ्युदयमधिमुखं राजते राजतेज: ।।

133 धन्य: कश्चिज्जगति विषयस्तावकालोकितानां
अत्रामुत्राप्यखिलजननि प्राप्य गोत्राधिकृत्त्वम् ।

सत्सन्तान प्रभव सुमनस्सेवया मोदशाली

जैत्रस्थानं किमपि भजति श्रीमदुच्चामरञ्च ।।

134 शय्योत्थायं जननि धनिनां वासमासायमित्थं

गत्वागत्वा प्यनुदिन मनुच्छिन्न तृष्णोद्गमोहम् ।

ह्रद्यापाङ्गामिव भवदवप्लोष शान्त्यै रमे त्वां

हृद्यापाङ्गां मधुरिपु वशीकार विद्ये प्रपद्ये ।।

135 वितन्वन्त्यामिष्टं विविधमचिरादीक्षणलवैः

भवत्यां जाग्रत्यां भगवति नरान् सेवितुमनाः ।

क्षरन्तीमभ्यर्णे कमलसुरभिस्वादु सलिलां

स्रवन्तीमुल्लङ्घ्य श्रयति मृगतृष्णा मतितृषा ।।

136 अजीर्यदघनाशनं दृढगदाकरं देवियत्

पुराणमपि पूरुषं पुनरलङ्घनं पुष्यति ।

तदेतदिह पातुनस्तव कटाक्ष दिव्यौषधं

फणीन्द्रशय जीविके भवविपन्मयादामयात् ।।

137 दुर्लङ्घ संसृति दुरर्णव कर्णधाराः

सम्पद्वधू सतत नर्तनसूत्र धाराः ।

अज्ञान कानन विदार कुठारधाराः

पद्मे जयन्ति भवदीय कटाक्ष धाराः ।।

138 देवि कटाक्ष लवस्तव रिक्ते सम्पदमाधिपदेपि निधत्ते ।

सिन्धुकुमारि तथाप्यतमस्के सिध्यति तत्र समाधिरहमे ।।

139 करुणया कलशोदधि कन्यके जडतमेष्ववलोक मघापहं ।

वितनुषे सकृदेष पुनस्तनोत्यनवलोक मधन्यदुरासदम् ।।

140 स्वादु शीतळदयारसपूर्णं सेवितं द्विजवरैरमृतोत्कैः ।

देवि तावक कटाक्ष तटाकं विश्व तापविगमाय विगाहे ।।

141 प्रागेव स्यात् प्रार्थितार्थस्य सिद्धिः पश्चादम्ब त्वत्कटाक्षोपलम्भः ।

दृष्टान्तो नस्तत्रतेदृष्टिपातात् प्रागम्भोधिं लङ्घयन् पावमानिः ।।

142 वक्षोरक्षे शार्ङ्गिणः स्थूललक्षे तत्तादृक्षे जाग्रति त्वत्कटाक्षे ।
सूनश्रीभिस्सान्द्रगन्धेपरोक्षे कुर्यादास्थामल्पधीः कल्पवृक्षे ।।

143 रचयति तव वीक्षां नूनमङ्गेपिरक्षां
दुरित चरित भेदी देशिको मन्त्रवादी ।
तदिह गळितमोहो द्रागयं पद्मगेहे
विषयरुचि पिशाची विक्रियाभिर्व्यमोचि ।।

144 जगदम्ब तवापाङ्गो जलजातशरः प्रपुष्ट मधुकालः ।
कमले कथय कथंवा करोत्यसौ सर्वमङ्गळेनामिम् ।।

145 तिष्ठन्त्वष्टम एव भूसुतशनि प्रष्ठाश्च दुष्टा ग्रहाः
फाले कामपि लेलिखीतु जगतस्स्रष्टापि कष्टां दशां ।
तेकिं कुर्यु रपाङ्गतो मयि सकृद्देवि त्वयाङ्गीकृते
नीहारो न करस्थमम्बरमणेः लीलाम्बुजं बाधते ।।

146 विजयापजयौ रमे भवेतां त्वदपाङ्गान्वय तद्विपर्ययाभ्यां ।
अजयत्तव वीक्षया हनूमान् अधिलङ्कं विकटाक्ष राक्षसौघं ।।

147 प्रतिघोष्णम धीशितुर्न पद्मे भवदीक्षाविषयं प्रवेष्टुमीष्टे ।
त्वदपाङ्ग सुधार्द्रित स्तुषारीभवदग्नि र्हनुमानिह प्रमाणम् ।।

148 कटाक्ष प्रत्यूषे तव मिषति कंसारि दयिते
तमश्शाम्यत्यन्तर्गतमपि च सूर्याकलनतः ।
स्वयं दोषोन्मेषो विरमति पुनस्सारसवन-
श्रियस्सम्पद्यन्ते दिवि चभविता भासनमपि ।।

149 सुरभिस्तनुते तवावलोकः सुमनस्सम्पद मम्ब भूमिजानां ।
अविपल्लवतां विधाय पुष्णात्यपि चामोद मदीमिकाननानां ।।

150 कमले गभीर करुणाजलधे त्वयिमन्दरक्षण विकासिहृदि ।
कलितोदया मृदु कटाक्षसुधा प्रथयत्यसौ सुमनसां प्रमदं ।।

151 प्रतिघानलं भुजग शैलपतेः प्रशमंनयन्त्यतितरां शिशिरा ।
कमलालये तव कटाक्षझरी विधुनोतु मे वृजिन ताप भरं ।।

152 दृशो लेशं देयाः त्रियुग सखि देयं कियदिदं

महोदारायास्ते ममतु सुमहानेष विभवः ।

कणानत्र द्वित्रान् गणयति न वारां जलधरः

प्रपद्यन्ते शुक्तौ परिणतिममी मौक्तिकतया ।।

153 बिलेशय कुलेशभूधरपति प्रिये त्वदृया

तरङ्गितं अपाङ्गितं धृतवतश्चिरं दृश्यते ।

विकस्वर पिक स्वर व्यतिकर स्फुरन्निष्कुटं

नटद्युवति नूपुर क्वणित सुन्दरं मन्दिरं ।।

154 नारायण प्रणयिनि त्वमपाङ्ग दुग्ध

धाराभिराभिरभिषिञ्च दयाम्बुधे माम् ।

स्मेरानवद्य निरुपाख्य सुखं यतो मे

स्वाराज्य भाग्यमपि सेत्स्यति शाश्वतं तत् ।।

155 भो भूपभूमौ भ्रम भीम पाप भूमेतिमेमूर्ध्नि लिपिं विधातुः ।

पवर्गगर्भां परिमृज्य पद्मे लिखस्यपाङ्गै रपवर्गगर्भाम् ।।

156 यं त्वन्देवि निरीक्षसे यदुपतेः कान्ते दृशा तादृशा

तत्र स्तोत्रगिरश्चरन्ति विदुषां तत्रैव चित्रा गुणाः ।

तेनैव व्यपदेशमृच्छति कुलं तस्मै मतिस्तिष्ठते

द्रष्टा पृष्ठमेरेस्सएव न पुनर्धन्यं तदन्यं विदुः ।।

157 अपार संसार तपातपार्ति व्यपायदच्छायमपास्तदोषं ।

कृपामरन्दैश्शिशिरं रमे त्वदपाङ्ग कल्पद्रुमुपाश्रयामः ।।

158 भ[illegible] मनं विरजा तरङ्गं पश्याम्यपाङ्गमखिलाम्ब यदाप्लुताङ्गः ।

पीताम्बराकलित दीप्तिपदं परार्ध्यं

मुक्तादि भूषितमुपेत्य मुदन्दधाति ।।

159 दुर्वर्णमर्णवसुते नमतां ललाटे

लोकाम्ब लुम्पति कटाक्षझर स्त्वदीयः ।

तेराजताभ्युदयिनः पुनरुल्लसन्तीति-

एतत्करोति हृदि विस्मयमस्मदीये ।।

160 देवि दुर्गत मरौ तव वीक्षा काळिका दिशति काञ्चन वृष्टिं ।
तस्य सिध्यति सुकीर्तिरुदञ्चद्धीरसस्यविभवश्च ततस्स्यात् ।।

161 वरुणालय सार्व भौमकन्ये करुणापाङ्ग मधुव्रत स्त्वदीयः ।
मधुनाशनमेत्य वृद्धिमृच्छन्नधुना नीरजसङ्गतिं विधत्तां।।

162 निद्राजुषां भवविषादमये निशीथे

स्वापाङ्गमर्पयसि शोभनमौषधं नः ।

चित्रं ततोपि जगदम्ब चिरं विनिद्रं

वेत्स्यामहे विगत दुःखपदं प्रबोधं ।।

163 स्वालोकं शिशिरं चिराय नयसे यं जायमानं जनं
सम्पश्येन्मधुकाल एव सुमनस्सत्वावहस्तंततः ।
पाथोजायतने रजांसि जनयन्वेधोदृगूष्मागमः
रौद्रालोक घनागमश्च तमसां कर्ता न तत्रास्पदी ।।

164 प्रायः कञ्चिददृष्टवन्तमवनौ पद्मे दृशा स्वीयया
संयोज्य प्रसभं क्षणेन तनुषे जन्तुं सहस्रेक्षणं ।
आधित्सस्यसहवपदे त्रिदशनेत्राकार भाजं तम
प्येणाङ्क स्वसरीदृशं घटयितुं द्रागीशिषे दुर्घटम् ।।

165 मुखरुचिसरित्तरङ्गाः स्मितसित शतपत्र लोलकळ भृङ्गाः ।
सम्पन्नर्तनरङ्गा जयन्ति जगदम्ब तावकापाङ्गाः ।।

## 6. यत्न स्तबकः

166 श्रीनिवासस्य महिषीं श्रेयसे तामुपास्महे ।
यदर्थमेव विदधे यत्नं भूयांसमच्युतः ।।

167 कमले कमलेक्षणस्त्वदर्थे कठिनं कर्म करोत्यसौ न किं वा ।

कलशोदधिमन्थन प्रयासादपरं किं श्रमदायि कर्म लोके? ।।

168 तवगुरु स्तन शैल भरंसदा जननि वोढुमना जगतां पिता ।
उरु भरोद्वहनाभ्यसनायर्किं तमपि मन्दर मम्बुनिधौ दधौ ।।

169 नादत्तमध्यवनि सिध्यति किञ्चनेति
निश्चिन्वता भगवतापि विवित्सता त्वां ।
वैदेहि कामपि शिलामबलां विधाय
कन्याप्रदानविधिरक्षपदाय चक्रे ।।

170 विद्यां बलां रघुपतिः पथि गाधिपुत्रात्
संप्राप्य निह्नुत समस्त तनु क्लमोपि ।
अम्बा तनुक्लम हरामबलामिह त्वां
स्वस्य ध्रुवं घटयितुं तमुपास्त भूयः ।।

171 शंसन्ति पंक्तिरथयागविधेः फलं यं
सोयं मघावनिभवां जनकात्मजे त्वां ।
प्राप्तुं व्यधात्कुशिक नन्दनयज्ञरक्षां
रक्षांसि हन्त दमयन्युधि रामचन्द्रः ।।

172 भगवति क्षितिपुत्रि भवत्कृते भवहरोपि भवन् रघुनन्दनः ।
समभवद्भव चापलतान्तधीः स इति विस्मयवन्त इहास्महे ।।

173 त्वद्भूभटस्य धनुषा विजितस्सुमेषो रामस्तमेव नितरामभिराद्धुकामः ।
तत्प्रीत्तये जनकनन्दिनि तद्विपक्ष कोदण्ड भङ्ग मुपहारमिवाजहार ।।

174 कर्तव्ये जनकेन मैथिलि तवोद्वाह क्रमालोचने
सोयं वागुपकार मारचयिते त्यालोच्य भावि स्थितिं ।
तद्वंशैक पुरोहितस्य हि शतानन्दस्य हर्षाय त
न्मातुर्ग्रावदशां हरन्रघुपतिः तस्योपकारं व्यधात् ।।

75 सुन्दस्त्री तनुभू सुबाहु कुहनोपज्ञं तु यज्ञक्रिया
प्रत्यूहं शमयन् प्रहृष्य घटकं शुश्रूषया कौशिकम् ।
दुर्दर्शं शशिखण्डमण्डन महादोर्दण्ड कोदण्डम-
-प्युर्वी नन्दिनि खण्डयन्नुदवहत् त्वामम्ब रामः श्रमात् ।।

176 त्वां मार्गमाण स्त्वदुदन्तशंसिने वृद्धाय गृध्राय रमे रघूद्वहः ।
योग्येकयोग्यानि पदान्यदादहो सन्तोपि वेलामतियान्ति रागतः ।।

177 अपि सकल शरण्यो मानिना मग्रगण्यः
भगवति भवदर्थे भानु वंशाधि नाथः ।
कपिमपि शरणोत्कः कञ्चिदानञ्च कष्टं
गणयति न फलार्थी गौरवं लाघवं वा ।।

178 त्वद्दाने जनकेन मैथिलि पुरा शुल्कीकृतं स्वामिनः
पाण्यङ्गुष्ठ किणं व्यधात्पशुपतेश्चापे गुणारोपणम् ।
त्वत्संप्राप्ति सहाय वानरपतेः प्रत्यायनार्थं त्वभूत्
पादाङ्गुष्ठ किणाय दुन्दुभितनो स्तद्दूरतः क्षेपणम् ।।

179 निशिचरपतिमन्तं नेष्यता तद्गृहीतां
पुनरवनि सुते त्वां प्राप्स्यता राघवेण ।
तरणिजमभिराद्धुं तत्रकार्ये सहायं
सपदि निरपराधस्साादितो हन्त वाली ।।

180 परोरजसि धामनि श्रुतिशिरो भुवि च्छान्दसे
महामहसि योगिनां दहरमन्दिरे च स्थितः ।
धरा दुहित रादरा त्तव कृते कपीन्द्रागतिम्
प्रतीक्ष्य दिवसान् बहू नवसदृश्यमूके प्रभुः ।।

181 रघुकुलपतिना ते लोकनाथैव सीते
कृतरविसुतसेवः कोपि दत्तानु भावः ।
वनशिखरि विहारी वानर ब्रह्मचारी
जलधिमपि ललङ्घेऽजातखेदं ललन् खे ।।

182 द्रष्टुं त्वां ननुहनुमन्तमग्निदाहादि
आतङ्कं बहुमधिलङ्कमाप्तवन्तं ।
सर्वस्वायित परिरम्भ सौख्यदानात्
काकुत्स्थो जननि चकार निर्व्रणं तं ।।

183 दरादुपनतं रमे दशशिरोऽनुजं त्वत्कृते

समस्त नयकोविदस्सपदि संग्रहीतुं प्रभुः ।

असाधितरिपुस्थलोप्यभिषिषेच तं तत्पदे

नरःकुशलमश्नुते न खलु साहसिक्याहृते ।।

184 स्त्रीहेतोः प्रथमं निजेन गुरुणा व्युत्पादितं ज्यायसः

साम्राज्यानुभवे भवेदनुज इत्येतद्विगीतक्रमम् ।

सुग्रीवे च विभीषणे च भगवानाम्रेडयामास तं

भूमेः पुत्रि भवत्कृते पितृगुणः पुत्रे हि धत्ते पदम् ।।

185 देवि त्वदर्थे दयितं नदीनां सतां शरण्यः शरणं स गच्छन् ।

कुशेशयाक्षोपि कुशेशयत्वं प्राप त्वदावासपदाशयेव ।।

186 प्रत्यानेतुमुपागताय भवती मासन्न लङ्कोषितां

वात्सल्यादिव ते विभागचकितो वारान्निधि स्त्वद्गुरुः ।

काकुत्स्थाय चिराय मार्गमदिश त्कालाग्निनेवामुना

शोणाक्षेण रुषा शुशोषयिषितः सीते शितैस्सायकैः ।।

187 प्रपात्य महतो गिरीन् प्रसभमन्तरिन्द्रेणयः

प्यधायि वसुधासुते तदनुजस्त्वदर्थं प्रभुः ।

अमुं बहिरिला धरै रपिदधन्निधिं पाथसां

कपिव्रजकरार्पितैः किमिह शेषपूर्तिं व्यधात् ।।

188 अंघ्र्यो रक्षणोरपि किल फलं वानराणां नराणां

आराद्राशिं तरितुमनसां अंभसामंहसाञ्च ।

मानार्हस्त्वामहित भवना न्मानिनीमानिनीषुः

काकुत्स्थोसौ जननि विदधे कौतुकात्सेतुकार्यं ।।

89 अन्तर्यस्स्फुटमनलेन वारितो भूत्

विश्वेषां जननि विधातुमेषसेतुं ।

त्वल्लिप्साकुल रघुनाथ चोदनातः

पाथोधिर्बहिरपि वारितो नलेन ।।

190 सेतुन्देवि भवत्कृते रघुपतिः सृष्ट्वा जनांश्चापुनात्
एतेषां सगरान्ववाय जनुषामेष स्वभावो ध्रुवम्।
स्वर्गादिव भगीरथः पितृकृते भर्गाच्चिरोषाविलात्
आनीतैरपुनीत लोकमखिलं गांगैस्तरंगैः कृती।।

191 प्रभोरलंकोपनिरोधमम्ब कृतेऽपराधे ऽपि करिष्यसीति।
लङ्कोपरोधं रघुवीरदासा हन्त त्वदर्थं हरयो वितेनुः।।

192 प्रीतिन्निनीषुः प्रियदेवतां त्वां समुद्रतीरे ऽभिचरन् स रामः।
महाहवं मैथिलि वर्धयिष्यन्नयोमुखेन व्यलुनात् पलाशान्।।

193 त्वल्लिप्सयैव धर्मेष्वारक्तो विप्रयोगिवदव्यसनी।
काञ्चनदान समृद्धिं भुविवरदेविप्रहस्तमनयदिनः।।

194 सदस्युदारेप्यतिकायमान महालये सत्यभितोरणाग्रे।
जयश्रियाहन्त बलाद्धृतोपि त्वय्येव विन्यस्तमनास्सनाथः।।

195 विष्णुस्स्वयं त्वद्विरहासहिष्णुः अपांसुलेहंसकुलावतंसः।
तपस्वरूपस्यकृतप्रभेदं निनिन्द भूनन्दिनि मेघनादम्।।

196 उच्चैरावणपुष्टःकुम्भस्तव देवि कुम्भिनीतनये।
सद्यस्तनवैरीति क्रोधादेनं जघान रघुनाथः।।

197 लोकव्रातालम्भकं कुम्भकर्णं लुम्पन्नम्ब त्वत्कृते रामचन्द्रः।
अथदिषत्वज्जनन्या धरण्याः भूरि भारं देवि दूरीचकार।।

198 निर्णीय भूयस्तर पुण्यलभ्यं रामः क्षमापुत्रि समागमं ते।
नीत्वाहवं पुण्यजनाननेकान् अकारयत्स्वर्वनिता विवाहम्।।

199 धर्मं हि पूर्वमवलम्ब्य कृते जनन्याः कालं निनाय कुतुकादधिकाननं यः।
देवि त्वदर्थमवलम्ब्य तमेव रामः कालन्निनाय कुतुकादधिकाननं सः।।

200 पाप पञ्चक निरास हेतुना सेतुना तव कृते महीसुते।
एत्य पापदशकं विनाशयन्नीशिता चतुरतामदर्शयत्।

201 परमार्थयितुं हुताशनाच्छ्रिय मिच्छेद्रिति साधु भाषितं।
भवतीं श्रियमम्ब पावका ज्जगृहे जानकि लक्ष्मणाग्रजः।।

202 प्राणव्ययं कृतवत: प्लवगांस्त्वदर्थं
भूयोपि जानकि जिजीवयिषुस्स राम: ।
वव्रे वरं त्रिजगतां वरदोपि देवान्
कार्यार्थिनो हि पुरुषस्य कुतोवलेप: ।।

203 काकुत्स्थ: कमनीय भूषणमणि क्षौमाग्र्यहेमादिभि: ।
तोषं देवि निनाय वानर भटान् त्वत्कार्य धुर्यान्प्रभु: ।
एतद्युक्तमिदन्तु विस्मयकरं यत्सर्वनिर्वाहिणे
रङ्गं हन्त विभीषणाय दिदिशे रत्नादियोग्याय स: ।।

204 अवतारान् दश भगवानपत्यभूतं जगत्समस्तंते ।
त्रातुं मातरकार्षीत् त्वदिष्टकरणाद्दतेनतस्य फलं ।।

## 7. मङ्गळाख्य स्तबक:

205 भागधेयं भजेयं तत् फणिशैल कुटुम्बिन: ।
मनीषिणो यदेवाहु: मङ्गळानाञ्च मङ्गळं ।।

206 तनोति सिन्धोस्तनये कथञ्चित् तवांशलेशो यदि सन्निधानं ।
तृणेपिमाङ्गळ्यमुदेत्यखर्वं दूर्वादिरेवात्र निदर्शनं न: ।।

207 गरुडध्वज वल्लभे शुभे गणवर्णादिज दोष शान्तये ।
वरदे तव वाचकं पदं कवय: काव्यमुखे प्रयुञ्जते ।।

208 विदु: पदाब्जं तव विश्वमङ्गळं हरिप्रिये यत्परिचार वैभवात् ।
समाश्रिता स्थाणुमपि श्मशानगं जगत्यपर्णाजनि सर्वमङ्गळा ।।

209 तातो दुग्धपयोनिधि: सहभुवस्ते कौस्तुभाद्याश्शुभा:
देवस्त्वव्यय दिव्य मङ्गळ वपु: श्रीवत्सलक्ष्मा पति: ।
नाम श्रीरिति धाम पद्ममखिल क्षेमङ्कर: पक्षिराट्
वाह: को हरि वल्लभे कवयितुं माङ्गळ्यमीष्टे तव ।।

210 यस्तु श्रीर्नपुरस्करोत्यविनयाद्वस्तु त्वदीयं शुभं

तस्मिन्नृत्यति दुर्गतिश्चिरतरं तत्र प्रमाणन्तु नः ।
दुर्वासः प्रतिघोद्गमादधिगतस्वर्वासत्वच्युतिः
दिव्यं माल्यमहोमदादगणयन् देवश्शचीवल्लभः ।।

211 दृष्टिश्शिवोदयकरी करुणाभिरार्द्रा
युक्तं तवाम्ब भजते भवतारकत्वं
ज्येष्ठाश्रयोपि मघवान्स्तुतिभिस्तवाहो
प्राप्यातुलो ऽ जनि पुनर्वसुवर्गमुक्त

212 फणिशयदयितेतवस्तुतिर्भगवति पावनरीतिमाश्रिता ।
अवितथमत एव तद्बलाच्छुभमगतोपि सुमङ्गळत्यहो ।।

213 त्वद्भ्रातुरिन्दोरनुचारयोगात् प्रायेणमूढोप्यशुभः कुजन्मा ।
स्वभूविभूषे स बुधाग्रगण्यो बभूव जग्राह च मङ्गळाख्यां ।।

214 जगृहे क्वचिदच्युतोऽवतारे जगतां मातरिनान्वयं पुरा यः ।
तमजस्रमिनान्वयन्नयन्ती शिवतातं शिवतातिमातनोषि ।।

215 कृत्पत्तिमूलमपि केशव पादपद्मं
कल्याणि ते शुभ कराम्बुज मेळनेन
त्रैलोक्यमङ्गळ मजीजनदब्धिकन्ये
तीर्थं शिवत्व परीदायि कपालिनोपि

216 कन्ये दुग्धोदन्वतस्तावकीनं मन्ये रूपं मङ्गळं मङ्गळानां ।
यत्सावर्ण्यं प्राम भद्रा हरिद्रा सौमङ्गल्यं संविधत्ते वधूनाम् ।।

217 यस्ते रूपमुपास्ते शुभं प्रपन्नं श्रियं हरिद्राजां ।
तत्क्रतुनयेन स वहेदमुत्र जननि श्रियं हरिद्राजां ।।

## 8. सौन्दर्य स्तबकः

218 वन्दे सौन्दर्यपर्याप्ति भूमिं कामपि देवतां ।
अब्जं सहोदरं यस्या श्शंसन्त्यब्जशरं सुतं ।।

219 अद्वैतमक्षिभिरिह श्रवसां यदिस्या॰ द्वैतं पृथग्यदि पुनारसनासु चस्यात्।
ईशीय वर्णयितुमर्णव राजकन्ये तत्तादृशं किल तवावयवाभिरूप्यम्॥

220 मौलौ त्वयापि विधृतो मधुपौघ मैत्रीं
चित्रं करोति कमले चिकुरप्रपञ्चः।
माने कृतेऽपि भुवने मलिनैकसख्यं
प्रायेण देवि कुटिलप्र॰तेः स्वभावः॥

221 नत्वन्दधासि नव चम्पक माल्यमम्ब
कर्तुं निसर्गसुरभौकबरे सुगन्धं।
किंतर्हि कुन्तळ परीमळसारलाभ
लोभभ्रमद्भ्रमर लोक निवारणाय॥

222 रुचं रचयितुं कचे रुचिर पुष्प वर्गैस्समं
सदा वहसि भूषणं सह सुधांशुना पूषणं।
उभावभवतामतो जननि पुष्पवन्ताविमौ
तयोर्घटनयोत्तमः श्रियमुपैषि तत्रार्थिकीं॥

223 सुमनोवरवासवासनाध्युषिताः कृष्णघनाभिशालिनः।
वरदेविजयन्ति कुन्तळा भवदीयास्सकलाप भृङ्गयाः॥

224 जलभृद्रुचि भाजि सिन्धुकन्ये शिखिषु द्वेष मुपेयुषि प्रकामं।
तमसाकलिते तवोपपन्नः कुटिले कुन्तळ मण्डलेऽहिबन्धः॥

225 अळकाकृतिरग्र॰ष्पकान्त प्रबलश्रीदतया तव प्रसिद्धा।
वरनीलरुचोज्वला॰रारे र्वीनिते भाति मुकुन्दलाळित श्रीः॥

226 भुवनोत्तरसिन्धु भूषितो घनशैवालकवत्कचो ध्रुवं।
सुरुचामहितो हिमालयो दितयो द्रावितमीनलाञ्छनः॥

227 सुतरामळक व्रज प्रसूनान्यलमम्लानि विशोभितानि बिभ्रत्।
सुरभिस्फुरित॰पुत्रि धात्र्यास्सुमहाराम विभूषितो विभाति॥

228 हन्त लक्ष्मि तव कुन्तळ व्रजं चामरं वदति पामरोपिकः।
प्राक्तनस्तुहरिणोपलाळितः पश्चिमं यदपुरस्कृतं मृगैः॥

229 सिन्दूरकान्तां जगदम्बमल्ली सराभिरामांचिकुरावळिं ते ।
मन्यामहे देवि कळिन्द कन्यां गङ्गा सरस्वत्युदितानुषङ्गां ।।

230 आपीडयन्ति कुसुमेषु शरानिकामं
आत्मानमित्यखिल धात्रि रुषेव देव:
आपीडयत्यनुदिनं तवकुन्तळात्मनि
अन्धे तमस्त्यहहसूनकुलं मुकुन्द: ।

231 बध्नासि हन्त सुरभौ सुमनोभिरम्ब साकं हरेरपि मनस्तव केशपाशे
आमोदमग्र्यमतएव तदेत्यनन्तं किन्न क्षमं गुणवदाश्रयणं गुणाय ।।

232 [illegible]खलैव दृष्टं कुलं सुमनसां फलवद्धि लोके ।
अप्याह्वतं बहिरहो सफलं प्रसूनं काल्पद्रुमं तु भवतीकचमण्डनेन ।।

233 सैरैर्दिव्यैराम्रेडित सहज सौरभ्यसुभगं
कचन्ते कल्याणि भ्रमति परितो भृङ्ग निचय:
ध्रुवन्तत्सारूप्यं स्वयमभिलषन् झङ्कृति मिषात्
स्तुवन् प्रादक्षिण्य क्रममखिलमात: कलयति ।।

234 प्रभोर्नाभीपद्मं भ्रमरततिरुत्सृज्य पतति
स्थिरामोदालम्बे चिकुर निकुरुम्बे जननि ते ।
मनागब्धे: कन्ये मधुरिपु समीपे परिचय:
नरोचेत प्रायो ननु मधुपवर्गस्यि मनसे ।।

235 क्षममिदं कलशोदधिकन्यके तव कच स्थिर सौरभ लोभत: ।
विकचसूनविशेष परीमळं जहदिह व्रजति भ्रमरव्रज: ।।

236 निहितास्तव कुन्तलान्धकारे निबिडे मारजनि स्थिरप्रकर्षे ।
कलयन्ति नवस्रजो विचित्रं कमले कामपि सौरभानुवृत्तिं ।।

237 कुन्तळो नियमितोपि भवत्या: चञ्चलो भवति तामस रुच्या ।
न्यक्करोति परिशोभितमालोत्कर्षमम्ब परिपुष्यति चैनम् ।।

238 कञ्जालये कमपि तावक फाल भागं सञ्जातशोभमळकावळि मेळनेन ।
उत्प्रेक्षते भुवि न कस्तरुणेन्दुमब्धे: उत्थानकालभव शैवलभारयोगं ।

239 चिरन्ते वक्त्रेण श्रितचिकुर वर्गेण कमले

तुलाञ्चेदारोढुं [illegible]ऽयं स्पृहयते।

तदा गाढं सख्यं तिमिर निकरै र्विन्दतु जवात्

अवाप्नोतु [illegible]भावमपि वा।।

240 पुरुष नयन युग्मं पुष्पवन्तात्मकंते

सह निवसति हर्षात्सन्ततं वक्त्र बिम्बे।

तदिह जलधिकन्ये तन्महादर्शलीलां

भजत इति कविनां भारती सूनृतैव।।

241 आदर्शे प्रतिबिम्बमात्र कलनादारोप्य मुग्धा जनाः

मातस्त्व[illegible]कान्ति चौर्यमनघे मथ्नन्ति तं पाणिभिः।

हासंक्रामति साधु तन्मलिनिमा हस्तेषु तेषां स्वयं

दद्ध्यान्नूनमनेनसां हि कलुषं मिथ्याभिशंसञ्जनः।।

242 विकचस्य कचोज्वलेन पद्मे विकळङ्केन कथन्नु पङ्क भाजः।

सरसेनगतस्य नीरसत्वं जलजातस्य भवन्मुखेन सख्यम्।।

243 नदवनजमहोमहातपश्री कृतरुचितेमुखजन्मलिप्समानं।

अपि यदि तदधश्शिरस्तपस्ये ज्जनवदनङ्कमले भवेत्तथापि।।

244 विजिते ननु ते मुखेनराज न्यपिदुर्गेश्वरमौळिपूज्यपादे।

वनवासितया तपस्पृहाणां विजये को विशयः कुशेशयानां।।

245 तदब्जमब्जश्च तवाननद्विषौ मुरारिपत्नि व्रजतः पराजयम्।

द्विषा सहैकेन मिथोविरोधिनो र्न योद्धुमस्ति प्रभुता द्वयोरपि।।

246 त्वदास्यवसुतस्करं ध्रुवमवैमि जैवातृकं

पयोजनिलयेयतः पिहितमन्दिरायां त्वयि।

असौ निशि विजृम्भते पुनरपावृते धाम्नि ते

पराचलवनेरवे[illegible]णिषु वा दिवा लीयते।।

247 जन्म मन्दिरमशोक सम्पदस्सालकान्तमुरुकान्तिकन्दळम्।

आननं मदन केळिकाननं मन्यते जननि माधवस्तव।।

248 स्वरूपतस्त्वद्वदनात्मना तथा द्विधा सुधांशु र्जलधावजायत ।
तदेष राजा द्विजराज इत्यदः पदंदधात्यर्थवदच्युतप्रिये ।।

249 मातस्सरोजवदने वदने त्वदीये संफुल्लमुत्पलमिवाच्छसरोविशेषे ।
चन्द्रे कळङ्क इव भृङ्ग इवारविन्दे मन्देतरद्युतिरसौ तिलकस्समिन्धे ।

250 उपाश्रितानवयवमुद्गतश्रियं प्रियंगुणाधिकमणुमध्यमाशुभं ।
त्वमेयुषी वरतिलकानना रमे सुधान्य भूरुचिरसुधा धराप्यसि ।।

251 नलिन शशिनौ सिन्धोः कन्ये सरोगनभोगता
त्यजन कुतुकादेतौ जातौ त्वदक्षिमुखात्मना ।
सह निवसतस्सेतूकृत्य भ्रुवोर्युगमन्तरे
सहजरिपुताभाजो र्जन्मान्तरेपि न सङ्गतिः ।।

252 नयन युगळाक्रान्तं कर्णान्तयुग्ममधोक्षज प्रणयिनि तव स्रष्टा
दृष्ट्वा भयाकुल मानसः
अहह मुखमप्याभ्यां माक्राम्यशेषमिति न्यधात् किमुपरि
तयो र्धीमान् सीमाविभागशिले भ्रुवौ ।।

253 यत्किङ्करास्सरसिजाननशङ्कराद्याः देवास्सएष दनुजारिरपि भ्रुवोस्ते ।
जागर्ति किङ्करतया जगदम्ब नित्यं छन्दानुवर्तन कृतः कुटिलस्य सर्वे ।।

254 श्रुत्यन्तजुष्टममलोत्पल कान्ति योगा दत्यन्त सुन्दरमनङ्गजनेर्निदानम् ।
उद्भासितामरसभामहितं मदम्ब कोनस्तुवीत नयनं तव कृष्णरूपम् ।।

255 दुग्धाम्भोधिसुते त्वदक्षिविजितो राजानमेणोगतः
त्यक्त्वासावपि मण्डलं मुखजितो दुर्गेशमेणाश्रयः ।
सत्वेकं करतो परञ्च शिरसा धृत्वा दृगास्यद्विषोः
दुर्गेशस्स्वयमीश्वरोप्यटति खल्वद्यापि भिक्षामहो ।।

256 निशाया मम्ब त्वन्नयन सुषुमा मोषकमिति क्रुधा नूनं राज्ञा
कुवलयमिहाकारि विकचं ।
चकोरास्तच्चोराः चकितमनसः प्रेक्ष्य तदिदं सुतमास्तत्पादं
ग्रहणमभितन्वन्त्यशरणाः ।।

257 नयनं तव देवि वर्णरीते र्विपरीतेपिविपर्ययन्नयाति ।
कमलन्तु तमेति कञ्जगेहे कथमाहुस्समतां तयोः कवीन्द्राः ।।

258 चक्षुः प्रमाणेन समुद्रकन्ये सीमश्रुतेस्सङ्कुचिता तवाभूत् ।
न तत्र कैमुत्य नया त्कथञ्चित् उन्मेषमृच्छत्युपमानवार्ता ।।

259 अमर्षाल्लोकाम्ब स्ववसुहरनीलोत्पल भृतोः
अपि श्रुत्यो स्सीमां कबळयति ते नेत्र युगळम् ।
कृतः कल्येष्वार्तिं न परमपराधः फलति तत्
विपक्षाणां पक्ष्यीकृतिरपि विषादाय भवति ।।

260 त्रैलोक्य सन्त्रायणि तावकीनो ध्रुवं कटाक्षो धृतराष्ट्रजातः ।
कल्याणि कर्णप्रणयी कथं वा पुष्णाति कृष्णार्जुन दीप्तियोगम् ।।

261 आकर्णदेशादुदितप्रकर्षं तवाक्षिमन्ये तनुबाणरूपम् ।
यत्कङ्कटं वेङ्कटनायकस्य धैर्यात्मकं कृन्तति सिन्धुकन्ये ।।

262 गुप्ता वनेषु विचरन्ति सुहृद्यमीनाः कस्यापिनोकुवलयेषु दिवा प्रकाशः ।
राज्ञो बिभेति जगदम्ब कुशेशयाळिः कर्णेजपेजयति नेत्रयुगे भवत्याः ।।

263 आस्वादने कृतरसावधरामृतस्य
मातस्त्वदक्षिमधुपौ बत मार्गमध्ये ।
नासाख्य चम्पकमवेक्ष्य निवृत्तयत्नौ
दृष्टेप्सिताग्रहणतस्तरळौ सदास्तः ।।

264 जातोन्मेषौ मुखरुचि सुधा सागरे तावकीनौ
नेत्रात्मानौ जननि भुवनोज्जीवनौ दिव्य मीनौ ।
न्यूनाकारान् भगवति निजापेक्षया राक्षसारेः
चक्षुर्मीनान्कबळयत इत्येष जातिस्वभावः ।।

265 सौवर्णति सिन्धुकन्ये निरुन्ध्यात् आतङ्कन्नः कर्णताटङ्कयुग्मम् ।
नृत्यन्तीनां यत्र नेत्रद्युतीनां जालन्नीलग्राव भावं बिभर्ति ।।

266 पूषा कर्णे स्वर्णताटङ्क भूषा वेषादिन्धे पुत्रनामादरेण ।
तत्सामीप्यादेव देविप्रसादं नित्यं धत्ते नेत्रपङ्केरुहन्ते ।।

267 त्रैलोक्याम्ब त्वद्वतंसोत्पलान्ते गुञ्जंगुञ्जं सञ्चरन् चञ्चरीकः ।
किं व्याचष्टे कान्तसन्देशहारी कर्णाभ्यर्णे काममन्त्रार्थतत्त्वम् ।।

268 काचिद्भाति वतंसकोत्पलमयी कल्याण ताटङ्क सत्
प्राकाराश्रित कर्णधिष्ण्यनिहिता प्रायश्शतघ्नी रमे ।
तद्रत्नाग्निरुचारुणस्स्मृति भुवा तस्या मुखा त्प्रेर्यति
लोलम्बायसगोळक: प्रणयिनो दुर्मान वर्मार्दन: ।।

269 कंसारातेश्चाटुमाध्वी झरैस्ते कर्णौ पूर्णा वर्णविन्द्रस्य कन्ये ।
जानन्तस्तत्सन्निधौ चञ्चरीकाश्चञ्चूर्यन्ते नोत्पलं तत्र हेतु:

270 ग्रस्तवतंस कुवलयं दृग्युगमुपकूजदळिरवमिषात्ते ।
मद्वसुचोरइहेति प्रवदति किल कर्णपत्रमित्राय ।।

271 इमामवामां श्रुतिमिन्दिरेतव स्तुवन्ति सन्तस्स्मृति जन्मकारणं ।
शिरस्यमुष्यास्सुमनोभिरञ्चिते चकास्ति दृष्टि र्जगतामधीशितु: ।

272 तवद्वितीया श्रुतिरुच्चकैरसावनङ्ग भावानुगुणागुणाम्बुधे ।
वशे निधायैनमशेषशेषिणं करोति मातस्तव कर्म कारकम् ।।

273 दीव्यत्कर्णसुवर्ण कुण्डलमये दीप्ताग्निकुण्डे ज्वलत्
रत्नाङ्गारघनेहरे धृतिमयीं हुत्वाहुतिं तावके ।
भृङ्गाध्वर्युरनङ्गदीक्षित वृतो झङ्कारमन्त्राञ्जपन्
वाराशेर्दुहित: प्रदक्षिणविधिं वारान् विधत्ते बहून् ।।

274 देवानां मधुरं स्वतस्तुतिवचो देविस्वतो सुन्दरं
मादृग्बालक जलिपतञ्चजगती मात: श्रुती याति ते ।
तत्राद्यं तदवस्थमेव चरमं तत्तुल्यताङ्गाहते
मुक्तं शुक्तिषु मौक्तिकं घन पयोमुक्तातु नैवान्यथा ।।

275 स्फुरन्मुक्ताकान्ति स्फुटसलिल मग्नारुणमणि
प्रभाकल्हाराद्यं प्रिय नयनमीनैक शरणम् ।
हताशेषक्लान्तिं हरिदुपल नीलोत्पल घनम्
तटाकं ताटङ्कान्तरमुषसि सेवेतव रमे ।।

276 सुवर्णताटङ्क मुनिश्श्रुतौ स्थिर: प्रपन्नमुक्ताभ्युदयोदयोदधे ।
प्रकाशिताचिर्स्स्सरणि: प्रिये हरेश्चकास्तितते चक्र धराभिनन्दित: ।।

277 तिलप्रसूनं तुलयत्यसौ जगत् सवित्रि नासा तव सारसालये।
तदञ्चलोदञ्चि तुषार विप्रुषा समानतामेतितदग्रमौक्तिकम् ।।

278 नासा तवासौ नव वंशवल्ली कासारजावासिनि कात्र शङ्का।
प्रलम्बते तत्र यदम्बमुक्ता फलंबतेदं गळितं हि तस्याः ।।

279 श्रीरस्यकान्तिजलधौ सविभाति नासा
सेतुस्तवाद्भुतगतिः कलनेन यस्य।
नाथस्समेति नविदेहजयान्वयंहा
लङ्केशपाशकलनादपयात धैर्यः।

280 भ्रूसूत्राभ्यामूर्ध्वमाबध्य मिन्वन् नासावंशस्तम्भमम्भोधिजेते।
तत्र स्थित्वा ताण्डवं संविधत्ते चित्रक्रीडां चित्रभूनाट्यजीवी ।।

281 दिव्यन्ददाति नवचम्पकमम्ब गन्धं
त्वद्घ्राणजन्मनि तदेव सुधाब्धिकन्ये।
गृह्णाति तं बहुविधं कृतिनो ददाना
जन्मान्तरे समधिकं विभवं लभन्ते ।।

282 [illegible]ननि नासामौक्तिकं वेद्मि मल्ली
मुकुळमिति सुगन्धिश्वास मन्दानिलेन।
तदुपरि यदजस्रं तद्विकास प्रतीक्षं
दृगळियुगळमेतद्दृश्यते सावधानम् ।।

283 हसितरुचि सितांशुकं वसाना श्वसित समीर नटेन नाट्यमाना।
जनयति जननि त्वदीय नासा मणिगणिका मधुसूदनस्य मोदम् ।।

284 मुखविधुमधुरा धरोष्ठसन्ध्या परिसरसीम्नि हरिप्रिये भवत्याः।
भजति जननि नासिकाग्रमुक्ता फलमिह तार मुदार तार लीलाम् ।।

285 स्वरिपुरदभिया विविक्षुनासा बिलमिव मौक्तिकमेतदग्रलग्नम्।
सरसिजसदने निजप्रतीप श्वसित नि[illegible] कम्पमेति ।।

286 भवतीस्मित चन्द्रिका रमे भवती[illegible]न्दरदन्तरश्मिभिः।
भवतीय मकिञ्चनस्यमे भवतीव्रातपखेदशान्तये ।।

287 हसितं भवदीयमाद्यवर्णं जहदेतज्जननि स्वरूपगत्या।
विदधे विधुपाद जातमैत्री मतिमन्दस्य किलोचिताधराभिः ॥

288 मनोज मातस्तव मन्दहासं मन्ये मधु ध्वंसन कीर्ति भासं।
विसृत्वरं त्वद्रसनाग्रवृत्तेः वाग्देवताया वपुरंशपूरम् ॥

289 नासोरु मौक्तिक घृणिद्विगुणीकृतेन
हासोदयेन हसता सुषुमां हिमांशोः
हाहन्त सुन्दरि तवाधर बन्धुजीवः
पद्मे परिस्फुट मटीकत पाटलत्वम् ॥

290 बालेन्दुकान्तिरिव पश्चिम सान्ध्यरागे
पद्मालये स्फटिक भाइव .पद्मरागे।
प्रत्यग्र पुष्प सुषुमेवच पल्लवाग्रे
भाति स्मितद्युतिरसावधरे भवत्याः ॥

291 स्वाद्वी सुधास्मितमिषेण सुधाब्धिकन्ये
प्रत्यक्षतस्त्वदधरे परिदृश्यतेसौ।
सिक्ता यया तव सदा स्वदते चटूक्तिः
मातश्शुभाय मनसे मधुवैरिणोपि ॥

292 मृद्वीकेयन्नखलु भजते मृद्विकाराद्विशेषं
मन्ये पूरं मलिनमळिना माकरं माकरन्दम्।
मातर्नैवाकलयति सिता माधुरी साधुरीर्ति
हन्ताहन्तांतव सुवचने भाति मोचा मुमोच ॥

293 हत्वा वाचां रस मसदृशं हन्त पुण्ड्रेक्षवस्ते
गूढंमध्ये जठर कुहरं पाटवादूढवन्तः।
तं कृच्छ्रात्ते ददति च पुनर्दारिता दारुयन्त्रैः
मातर्देयं स्वयमददतां मर्दनं मार्दवाय ॥

294 अभ्यातञ्च्य क्षीरधिमिन्दोरमृतौघैः आमथ्यैनन्देविमथा चेक्षुमयेन।
तस्माद्[illegible]नीतं तिक्तीकुर्या दुक्ति रियं ते तदपि श्रीः ॥

295 मातस्समस्त जगतामसि माधवित्वं

मन्येतवाधर दळं मृदुळं प्रवाळम्।

दन्तावलिं सुमनसां ततिमुल्लिखामि

स्वादूनि वेद्मि च मधूनि सुभाषितानि ।।

296 मात र्भवन्मुख मयूख सुधाब्धिमध्ये

बिम्बाधरामृतम भूद्वचनामृतञ्च ।

आद्यन्तयोः पिबति सादरमाननेन

श्रोत्रद्वयेन चरमं परमः पुमान् सः ।।

297 परिहृत भवशब्दा भारती तावकीना

परिहसतु निकामं काळकण्ठाभिलापम्।

श्रुतिपथमधुरेयं सिन्धुकन्ये कथंवा

शुकमुख फणितीनां दोषमाविष्करोति ।।

298 असङ्कोचां मोचा मधुरिममदोन्मोचनविधौ

अनीचां ते वाचा महरह रहं नौमि लहरीम्।

उदूहे यां श्रोतुं कुतुकमुदधेः पुत्रि दधती

श्रुतीभावञ्चक्षुश्श्रुतिपतिदृशां विंशतिशती ।।

299 पर्यायश्शर्करायाः प्रतिकृतिरमृत स्रोतसां तादृशानां

साक्षी गोक्षीर भूम्नां सुरतरु सुमनो माक्षिकाणां विकारः ।

पुण्ड्रेक्षूणां प्रणाळी परिणति रतुला नाळिकेरोदकानां

सोयन्नाळीकगेहे जयतितववच स्सम्पदां सम्प्रदायः ।।

300 सुतासुधाब्धेस्सहजा सुधांशोः मातः प्रियात्वं मधुराधिपस्य ।

तथाविधायास्तव केन वीर्चीं आचान्तमोचां प्रवदन्ति वाचाम् ।।

301 द्राक्षाळिरादौ किल रूपयुक्ता मध्येधिकेक्षुप्रभवा सिता च ।

हास्या सुधाप्यग्रजनोपयुक्ता स्वादौ रमे जाग्रति वाग्रसे ते ।।

302 निस्सार वंशजठरे न्यविशन्त हन्त

दन्तद्युति प्रति भटा स्तव मौक्तिकौघाः ।

मातर्द्विजव्रज विरोधितया स्थितानां

मातङ्ग मौळिकलना प्युचितैव तेषाम् ।।

303 रमे रसज्ञाञ्चलशारदाया रदावळी ते रमणीय रूपा ।

मधुप्रतिक्षेपि मनोनुकूले मन्दारमालेव शुभा विभाति ।।

304 प्रकाशते सज्जघनागमे त्वयि प्रगल्भशोभोदयिनी रदावळिः ।

रमे मुकुन्देनकिलामुना धृता द्युतिर्यदीया सहसोन्मिषन्मुदा ।।

305 आमीकृताना ममुकेन हार्दा त्सदा मुकुन्देन सदाहतानां ।

शुचिद्विजानान्ननुतावकानां मुक्ताकृति र्विश्वसवित्रि युक्ता ।।

306 हन्तारस्तमसां दिशन्तु कमले दन्ता मुदं तावकाः

येषूद्दामजपासदृक्ष रसनाच्छायोपरक्तांशुषु ।

उच्चैः पक्विम दाडिम भ्रमवशादुत्पित्सुकेळी शुक-

प्रत्यावर्तन खेद निस्सहतया पाणिर्विशेषारुणः ।।

307 कन्ये सिन्धोः कापि मृद्वी सुहृद्यां दद्याद्विद्यां त्वद्रसज्ञा मनोज्ञा ।

यत्रव्यक्तो रक्तिमा वक्तिमातः वाचान्देव्या नित्यनृत्ताभिघातम् ।।

308 प्रह्वाजिह्वां तव तु शरणीकुर्महे शर्महेतुं

रागादागांस्युपचितवतो रक्षितुं या रमे नः ।

वारं वारं वृषगिरिपतेः कोपलोपानुरूपाः

सूक्तीरुक्त्वानियत मयते शोणिमानं श्रमेण ।।

309 कंसद्विषो महिषि कानन चन्द्रिकेति

दोषं विहाय रसनामवनात्मिकांते ।

प्रामापि पद्मजवधूर्वनजौकसस्ते

सङ्गादिवाधिकवनस्थितिमेति भूयः ।।

310 अभ्यर्चतामनघ वाङ्मयसारदाया

रूपं रुचा तुलित शारदनीरदायाः ।

वन्दीभवत्प्रथिततुम्बुरु नारदायाः

वन्दे तवाम्ब रसनाञ्चलशारदायाः ।।

311 वैकुण्ठकान्ते वचना धरौद्वौ वक्त्रे तवास्ताममृतावतारौ ।
आद्ये तु वर्णश्शुकलाळितो भूदन्त्ये पुनः किंशुकलालनीयः ।।

312 रागावनेरपि तवाधर जीवकस्य
राजीववासिनि निराकृतपल्लवस्य ।
अच्छैर्द्विजैः परिचया दमृतस्य रीतिं
आरोहतस्समुचितोरुणबिम्ब भेदः ।।

313 बिम्बोष्ठयोः पृथगवस्थितयोः कदाचित्
सन्धौ कृते जननि साधुपदे निविष्टैः ।
ओष्ठस्तवैष वितरन्निजमुख्यवर्णं
बिम्बाय लुम्पतिचतस्य जघन्यवर्णम् ।।

314 तवरद वसने गुणोत्तरेस्मि न्नधरपदस्य विरोधि लक्षणैव ।
अमृतकृदपि माधवो मुनीनाममृत मुपैतुममुन्निषेवतेयत् ।।

315 हरिगृहिणि हरिद्रा लिमया शम्पयाते
तनुमतनुतवेधास्तमकार्तस्वराभां ।
अधरमथच तत्राप्यम्ब लिम्पन् सुधौघैः
अनयदनणिमानं शोणिमानं किमेनं ।।

316 प्रायस्ते जगदम्ब चुम्बनविधौ बिम्बाधरालम्बनं
संक्रान्तं मधुनन्द नन्दनमुखं संगीतकाले पुनः ।
तस्माद्वेणुमवाप तद्गतरसास्वादी तदादित्सया
वंशान्कृष्णपुरन्धि रन्ध्रयति किं तद्वंशजातानळिः ।।

317 विद्वज्जनैरुचिरविद्रुम पंक्तिरेषा
विज्ञायतां मदधरादधराकिलेति ।
प्रत्यक्षतः प्रकटनाय पयोधिकन्ये
कर्णे बिभर्षि किमु विद्रुममालिकां त्वं ।।

318 कपोलौ ते भातः कनकमयताटङ्क सुषुमा
झराघातारक्तौ जनजननि यत्रैव निहिताः ।

अपि प्रौढेन्द्रद्विट्परिबृढवपु: पाटनखरा:

समाख्यामन्वर्थां दधति नरसिंहस्य नखरा: ।

319 कान्तौ भात: कपोलौ तवयदुपगतं कर्णरत्नांशुपूरं

सम्प्राप्तं चुम्बनेषु प्रियतमवदना दम्बतांबूलरागम् ।

मत्वा हस्ताङ्गुळीभिस्त्वमसनरुचिभि र्मार्जनैर्द्वित्रिरुक्तं

तन्दृष्ट्वा दर्पणेह्न,भरनमितमुखी हास्यसे प्रातराळया ।।

320 पाण्डिम्ना हसतेव कैटभरिपु: पाणिस्थशङ्खेन तं

पद्मावासिनि पर्यजीहसदसौ स्यालं हिजैवातृकम् ।

हित्वेशं प्रभुरित्यमुं प्रतिपरीहासाय वक्त्रात्मना

जातेनैवमध: कृतोहिमरुचा त्वत्कन्धरात्मा दर: ।।

321 अन्तस्थोष्मोद्धाराद्गृहीतमखिलाम्ब कंस दमनेन ।

पाञ्चशरजन्यमभित: प्रतिगर्जीति कन्धरा त्वदीयेयम् ।।

322 चक्राहतामुपगतं स्तनमुन्नतं ते

वीक्ष्यातितिक्षुरयमुच्छ्र्यवांस्ततोपि ।

कण्ठत्वमेत्य शिरसानिज भुक्त मुक्ता

हारञ्चवाहयति तेन तवाम्ब शङ्ख: ।।

323 जनस्त्रिलोकी जननि स्तनौते कथं पयोजे कथयत्यशेष: ।

चतुर्मुखाद्यर्भक जीवनाय जातं तयोरेव पयो हि भूय: ।।

324 अमृतकलशव्यूहेष्वात्मोद्भवेषु पयोधिना

त्वयि कुचमिषाद्द्वौ निक्षिप्तौ विवर्धयितुं जगत् ।

अमृतसहजे यद्दुग्धास्वादनोल्बणपाण्डिम

द्रुहिणरसनावासाद्गौरी वभूव सरस्वती ।।

325 न जातुचिद्वर्णविपर्ययं गतौ गुणोत्तरौ कन्दुक कञ्चुकौ तयो: ।

स्वमित्रमाद्यं कुरुते रमेन्तिमं बिभर्ति मूर्ध्ना त्वदुरोज भूमि भृत् ।।

326 पुरस्त्वदीयाङ्ग पुरप्रवेशे पुराणगोपाल भृतावनङ्ग: ।

उरोरुह क्षीर घटौ स पश्यन् उच्चैस्तरां नन्दति सिन्धुकन्ये ।।

327 पुष्पेषु पूजाविधिमाचरिष्यन् पुण्याहकुम्भाविव पद्मनाभः ।
पयोनिधेःपुत्रि महा क्षतैस्ते पयोधरावम्ब परिष्करोति ।।

328 परामिमामुन्नति मश्नुवाते स्मराम्बसद्मस्स्तन भूभृतौ ते ।
चराचराणामधिपोपि चक्री करार्पणं देवि ययोः करोति ।।

329 हन्तस्तनौ तव विभागकथानभिज्ञौ कन्दर्पमातरतएव करादिषुत्वं ।
अङ्गान्तरेषु पृथगाभरणं ददाना हारं द्वयोरपि तयोरपृथग्ददासि ।।

330 मुष्णाति मेदिनि भृतां श्रियमुन्नतानां सूर्याश्रितं परिहसत्यपि साधुचक्रं ।
ऊर्ध्वञ्चपश्यति रमे त्वदुरोजयुग्मं ईदृक्चरित्रमविवेकिनि नैव चित्रम् ।।

331 उच्चैरतन्वाज्यवतीर्णशक्त्योः भूयांसि पातुं क्षमयोः पयांसि ।
मातर्महाहारसमृद्धिभाजो र्युक्तं हि पीनत्व मुरोजयोस्ते ।।

332 विवेक वार्ता विरहेपि पद्मे गुरुत्व भाजोस्य कुचद्वयस्य ।
गिर्युत्तमा बिभ्रति शिष्य भावं क्षमाधरणां क्षममेतदेषाम् ।।

333 रमे कराभ्यां रचितार्दनस्य त्रैलोक्यभिक्षोरतनुप्रदानं ।
स्तनावुदारौ तनुतस्तवेमौ तृणीकृताष्टापदशैलशृङ्गौ ।।

334 कुचौ हिरण्याचल सम्पदं ते प्रह्लाद हेतू नियतं भजेते ।
तनोति मातस्तत एव नूनं नृकेसरी तत्र नख क्षतानि ।।

335 उत्तुङ्गयोस्तुल्यमुरोजयोस्ते गदन्ति खर्वं कथमम्ब कुम्भं ।
तत्कार्य भूतः प्रथयत्यगस्त्य स्तत्र स्वहेतौ परिमाणमेतत् ।।

336 रत व्रतारम्भ कृते रतीशो हरिद्रयालिममधोक्षजाय ।
माता रमे मङ्गळ नाळिकेर युगं ददौ किं त्वदुरोजरूपम् ।।

337 उरोजयुग्मं तव युक्ति भूम्ना करीन्द्र कुम्भौ कथयन्ति मातः ।
आभाति तस्योपरि मौक्तिकश्री रोमाळि शुण्डा च लसत्युपान्ते ।।

338 तवायमम्ब स्तनयोस्सखायौ दधाति कुम्भौ शिरसेति नूनं ।
ग्राहग्रहात्त्रातुमहो गजेन्द्रं त्वरा हरे क्वापि पुराविरासीत् ।।

339 चन्द्रेण चक्रमिथुनं कृतविप्रयोगत्रासादपेक्षित तदीयजनावलम्बं ।
वक्षोरुहद्वयमिषेण विधुस्वसस्ते प्राप्याङ्गमृच्छति निरन्तरसङ्गतिं तत् ।।

340 सोढुं कराभिहतिमप्र भवन्वधूनां द्राक्कन्दुकस्स्तनतयाम्ब तवावतीर्णः ।
तत्राप्यसौ भजति शौरि करोपमर्दं क्षिप्तस्सुहृद्भिरयते क्वन मर्दनानि ।।

341 नित्योल्लसद्घुसृण धातुनिवेश हृद्यौ मातस्तवस्तनगिरी जयतः कठोरौ ।
अध्यापितं कठिनता मरविन्दनाभे रालिङ्गनेषु किल येन भुजान्तराळम् ।।

342 घटिकाशतविश्रुतोच्छ्रयं घनसाहित्यमदस्स्तनद्वयं ।
कुरुतेकविचक्र निर्जयं कमलेकान्त गुरु प्रभोदयम् ।।

343 सुरत रुचिर लीला शोभितोसाविति श्रीः पृथुलकुचयुगं त्वं प्रेयसे देवि दत्से।
सतु तदपि गृहीत्वा चापलादम्बरं ते हरति परहिरण्यं हर्तुरेषस्वभावः ।।

344 उन्नमत्सरमनुन्नमत्सरं कन्दुके कलशसिन्धुकन्यके ।
पीडितोपितमपीडितोपितं भाति ते युगमुरोरुहोरहो ।।

345 उदग्रहारं कुचमण्डलंते जनार्दनो देवि जगत्य धीशः ।
निपीडयत्येष करग्रहेण कारुण्यवार्ता क्व हिरण्यहर्तुः ।।

346 मदम्ब भोग्यायतमाल्यजुष्टे तव स्तनद्वन्द्व गिरीश मौळौ ।
निकाममुद्वृत्ततया निपत्य लुठत्यसौ हार सुरस्रवन्ती ।।

347 पीतस्तनस्ते कमले शिशुत्वे पितामहस्सोजनि नित्यतृप्तः ।
सदातदास्वादकरस्समुक्ता हारोम्बकेनापतथाभिधानम् ।।

348 कल्याणि भावत्क कुचाग्रजाग्रत्प्रत्यग्रहार स्फुटमौक्तिकानि ।
प्रायस्सुमेरुं परितश्चरन्ति पटून्युडीनीव परिस्फुरन्ति ।।

349 स्तनयोरनयो स्तवाम्बुराशे स्तनये दीव्यति दिव्य हारयष्टिः ।
परितः पृथुळारविन्द कोशं प्रचरन्ती कळहंसमालिकेव ।।

350 मदनोपवने मदम्बदेहे तव बाहू कृतवल्लिका विमोहे ।
नवपल्लवफुल्ल पुष्प भूयं यदुपर्यङ्गुळयो नखाश्च यान्ति ।।

351 अम्भोजबन्धुरयमम्बुरुहान्दवीयान् तत्सन्निधिंजिगमिषुः तनये पयोधेः ।
अम्भोजमम्ब तवहस्त तयावतीर्णं सौवर्णकङ्कण मिषान्निकषा समिन्धे ।।

352 आम्रेडितत्वत्कर पद्मरागै रत्युज्वलैः कङ्कणपद्मरागैः ।
लीलाशुको डाडिमबीजलुब्धो विश्वम्भरप्रेयसि विप्रलब्धः ।।

353 कृताञ्चनौ काञ्चन कङ्कणस्थ सङ्क्रन्दनग्राव महस्तरङ्गैः ।
कल्याणि पाणी कनतस्तरां ते शैवालमालाभिरिवारविन्दे ।।

354 इन्धेतावक पाणिशोणिम भरः कल्याणि नैसर्गिकः
पद्मे कङ्कण पद्मराग किरण श्रेणीभिराप्यायितः ।

तत्संरूढ बिडाललोचन सुहृद्वैडूर्य वीक्षा भयो
-द्रच्छद्विभ्रम कीरवारण घनायासेन चाम्रेडितः ।।

355 काञ्ची कवीन्द्र कवनादपि कोमळं ते
कल्याणि पाणितलमम्बुजना भकान्ते ।
अश्रान्तमर्थिषुबहुष्वभितन्यमान
दानश्रमा दरुणिमानमुपैति नूनम् ।।

356 न केवलं नागनगेशकान्ते हस्तो ननु स्वर्णगतोधिकस्ते ।
यं सम्प्रदानीकुरुते सनिस्वं सोपि क्षितौ स्वर्णगतोधिकस्स्यात् ।।

357 असावनष्टापदमर्थिनं द्रागष्टापदावासमहो विधाय ।
आपत्कथादूरगमब्धिकन्ये करोति कल्याणि करस्त्वदीयः ।।

358 दीना दानैस्त्वत्कराब्जादुपात्तैः देवि स्थाने स्वर्णवत्वं प्रपन्नाः ।
आसन्नेतेसिन्धुकन्ये नदीनाः चित्रं नित्यं भान्ति लक्ष्मीकुमाराः ।।

359 कनत्कनककङ्कणोल्बणमणीघृणि श्रेणिका
महासरिदुदञ्चितं मकरमत्स्य रेखावृतं ।
प्रसह्यमधुनाशनं कृतवतैव कृष्णेन ते
कराम्बुरुहमिन्दिरे कलितपीडनं राजते ।।

360 स्वर्णस्फुरद्बहुविधोर्मिकमब्धिकन्ये रत्नाकरं तव करं निगदन्ति सन्तः ।
आक्रान्तसर्व भुवनो हि जनार्दनोऽसौ दुर्धर्षतां व्रजति यस्य परिग्रहेण ।।

361 पालकं सुमनसां तव स्थिर च्छायमब्धितनये समाश्रये ।
पञ्चशाखमिह भव्यकल्पकं दानवारि पद पोषणक्षमं ।।

362 जननिमरतकादि स्स्वार्द्धमारक्तरत्नैः विधुमुखि निहितस्ते व्यर्थमिवोर्मिकासु ।
प्रसृमर करदीधित्यङ्कुरैरङ्गुळीनां परिभजति यतोऽसौ पद्मरागाविशेषं ।।

363 रागं रमेतव कराङ्गुळिसङ्गलब्धं वीटीमुरान्तक मुखे प्रकटीकरोति ।
मुक्तास्वर्णनवचूर्णगनागवल्ली पर्णात्मनो न खलु रागकथान्यथास्याः ।।

364 भवान्धकूपे पतिताय मह्यं दुर्मोच कर्मोत्कर कर्कशाय ।
करावलम्बं कमले ददासि तदञ्चलं ते तत एव रक्तं ।।

365 दधति नखास्तवाम्ब तनु हेमलताभ भुजा
रुचिर करारविन्द चल दङ्गुळि कोटि जुषः ।
सरय सरस्वती झरसमापतनोपनत
हृदतनु वीचिकाञ्चल समुज्वल फेन तुलाम् ॥

366 समाननामा सविधुस्समानशे दशेह भावानिति मातरीर्ष्यया ।
प्रशस्तयोस्तावक हस्तयोर्विधुः दशावतारान्विदधे नखात्मना ॥

367 विभाति वाराशि [illegible] कन्यः प्रशस्त हस्तोल्लसितो नखात्मा ।
विधुर्विचित्रागम एव नूनं नाऽसौ तुलामेति यतः पदाऽपि ॥

368 क्षत्रं तदेव कथयन्ति बुधाः क्षतेभ्यो यत्त्रायते यदुपतेर्दयिते ततोऽहं ।
यत्प्रत्युत क्षतशतं तनुते प्रियाङ्गे नक्षत्रमेव तदवैमि नखं त्वदीयम् ॥

369 पाथोजाक्ष भुजान्तराळ वसतेः पद्मालयायाश्चिरं
पाण्योर्दक्षिणवामयोस्स्थितिमती पद्मे दिशेतां श्रियं ।
यत्रैकं हरिदृश्ययो र्मुकुळितं खेदाददाक्षिण्यव-
द्योगोत्थाध्रुवमन्यदेति हसितं दाक्षिण्यशाल्याश्रयात् ॥

370 रोमाळिन्द्रागुरुतां नाभिरन्ध्रा द्व्याळीं विद्मः पद्मगेहे भवत्याः ।
गाढोरोजस्मेर हाराग्रजाग्रद्रत्नं नूत्नं तच्छिरस्यं प्रतीमः ॥

371 शौरेस्सूरात्मनोऽक्ष्णस्समजनि यमुनेत्युद्गतेर्ष्येव गङ्गा
जातांघ्रेः तस्य गौणी किल तदपि तवापत्यतेत्यत्रनिन्दां ।
तस्याः कर्तुं तवासौ किमभवदुदरे भानुजा रोमराजी
व्याजाच्छ्रिवाम्ब पत्न्या विदुरुदरभवं मुख्यवृत्त्याह्यपत्यं ॥

372 जेतुं कंसारिमाराद्व्यवसितमधिका माजिसंघस्तनक्ष्मा-
-भृद्भ्यामभ्याशदेशे तव जयति तयो रोमरेखा शतघ्नी ।
दत्ते नाभीरमे सज्जघन धरणि भृन्मण्डले यन्मुखोद्यत्
तमायः पिण्ड पात स्थल नियम कृते क्षुम गर्तप्रतीतिम् ॥

373 अभ्युद्गताधर रस ग्रहणाय रोम रेखा षडङ्घ्रि ततिरम्ब पथि प्रस्न्दं ।
उत्तुङ्गसङ्गतमुरोजगिरीन्द्र युग्म मुल्लङ्घितुं चिरमुपायमुदीक्षते किं? ॥

374 रत्नावली तव रमे वरमेखलाया मञ्जारपंक्ति रविदूरगता तु तस्याः ।
रोमावळी तदुपजात विशीर्णमूल धूमाकृतिं वहति शक्रमणी विनीला ।।

375 निश्रेणिका नाथदृशोरुरोज दुर्गाधिरोहे तव रोमरेखा ।
लावण्यलक्ष्मी वरवेणिका वा रतीश भूपाल कृपाणिका वा ।।

376 सत्वद्गर्भ समुद्भवोऽप्ययुत शुक्रसन्दायकैः रसायकैः
पञ्चेषुः पितरञ्च वञ्चयति तत्पञ्चायुधं माधवं ।
लग्नानूनमतो जगज्जननि ते रोमावळिच्छद्मना
तातद्रोहिसुतप्रसूत्युपनता दुष्कीर्तिरिवोदरे ।।

377 रज्जुं रोमाळिरूपां गुरुकुचकलशालम्बिनीं जीवनार्थी
प्रातस्त्वन्नाभिवापी परिसरमनयन्मन्मथो जाततृष्णः ।
दृष्ट्वा तामत्यगाधामिह नपुनरलं दैर्घ्यमस्या इति श्रीः
तामौज्झत्तत्र रज्जु न्नतृष उपरतिश्शम्बर ध्वंसिनस्स्यात् ।।

378 ऋग्विक्रमे रतिमखे ननु यौवनात्मा नाभीबिलावटयुतोदरवेदिकायां ।
यूपं मिनोति तव रोमलता स्वरूपं शङ्केस्य सङ्गतमुरोजयुगं चषालं ।।

379 रतीशमातस्तव रोमवल्लिका मयी मनोज्ञा यमुना पुनातु मां ।
वलित्रयं यत्र तरङ्ग विभ्रमं बिभर्ति हारांशुचयश्च फेनतां ।।

380 स्तनाद्रिभाजि स्थिरहार शोभा सुधाम्बुधौ रोमलता मुरारेः ।
वटच्छदस्स्यादुदरं तवाम्ब वलित्रयं चित्रमिहोपधानम् ।।

381 नाभीसरो रोधसि नाळिकेर द्रुम भ्रमं रोमलता ददाति ।
तदग्रलग्नौ तनुतस्तव श्रीस्स्तनौ पुनस्तत्फलयुग्मशङ्कां ।।

382 नाभीसरश्चिरमगाधतरं विधाय नारायण प्रणयिनि श्रमिणा विधात्रा ।
रोमावळी तव विभाति तटे तदीये क्षिप्तेव तत्खननहेतुरयश्शलाका ।।

383 सरितो गिरितोऽवतीर्य निम्नं प्रविशन्त्यम्ब तवात्र नाभिगर्तात् ।
तनुरोमलतकलिन्दजा [illegible]ो स्तनशैलान्तिक मारुरुक्षतीव ।।

384 दायादः पितुरेष नाभिकमले दामोदरस्यैधते
धातेत्येवमसूययेव जननि प्रेप्सुस्ततोऽप्युच्छ्रयं ।

नाभी कूप समुत्थ रोम लतिका नाळाग्र जाताद्भुत
स्फारोरोज सरोज कोशयुगमध्यास्ते सुतस्ते स्मर: ।।

385 जित्वा जगन्ति विशिखै र्जगदम्ब जैत्र-
स्तंम्भं तवाङ्ग भुवि रोमलताच्छलेन।
मिन्वन्मनोजनृपति र्जितलोकसंख्यां
मूले किमस्य तिसृभिर्व्यलिखद्वलीभि: ।।

386 जगत्त्रयीचेतन जन्महेतौ वलित्रयी भाति तवोदरेस्मिन्।
नारायणप्रेयसि नाभिकूप निपान सोपान परम्परेव।।

387 स्नातस्य नाभिसरसि ध्रुवमब्धिकन्ये
सङ्गमुषो रतिपति व्रतिनस्समाधिं
आषाढमेव कलयेतवरोमराजिं
आस्यं वलित्रितयमस्य चदर्भकूर्चम्।

388 नाभीवापी सविध भुविते यौवनारामवृध्यै
न्यस्तं रोमावलिमय घटीयन्त्र दारुस्मरेण।
मूले तस्य स्फुरति रचितं पाद विन्यास हेतो:
सोपानानां त्रितयमुदधे: पुत्रि वळ्यात्मना किम्? ।।

389 दीर्घं नाभीविवरसरसो देवि गम्भीरिमाणं
स्पष्टं द्रष्टुं वृषगिरिपतेरक्ष्मावक्षिमीनौ।
गाम्भीर्यैकास्पदमपि रसै: पूरितं मानसं यत्
तस्यस्वैरं पतति जलधे: पुत्रि तत्रैव नित्यं।

390 आश्रित्य सज्जघन हस्तिगिरि स्थितायां
पञ्चायुधो भृशमुदञ्चति देवि काञ्च्यां
नाभीमनन्तसरसीं कलये खगेन्द्र
स्तम्भञ्च रोमलतिकां वळिधिष्णय भाजम्।

391 जघनपुळिनवत्यां केशशैवाल भाजि
त्रियुगनयनमीनै स्तृष्णया सेवितायां

त्वयिरस भरितायां दिव्यसौन्दर्यसिन्धौ

नळिनमुखि विधत्ते नाभिरावर्तशोभां ।।

92 त्वन्मध्ययष्टिं परिवेष्ट्य शेते नाभीबिलान्ते रशनापृदाकुः ।
असावपूर्वः कमले यदीयान्यङ्गानि सर्वाणि च रत्नवन्ति ।।

93 मध्यात्मना जननि शब्दगुणेन योगात्

जग्राह शब्दमतुलं रशना गुणस्ते ।

शौरेश्श्रवो वियति सौति सुखं सुशब्दैः

तुष्ट्यै विशिष्य किलशिष्य गिरोगुरोस्स्युः ।।

94 रतितन्त्ररहस्य मम्बशब्दै रमणीयैर्विशदं प्रकाशयन्ती ।
रसनैव रतिप्रियस्य नूनं रशनासाविति लेखकप्रमादः ।।

95 उपाश्रिता मध्यममब्धिकन्यके मणिप्रभाभिश्शमितोत्तमस्थितिः ।।
असौकृत श्रीमदनादरारमे नमेखला नप्रतिभाति मेखला ।।

96 यदनन्तपणिनिहितं सुमध्यमे वलते सुवर्णमयसूत्रमम्बते ।
गुणवृद्धिमान् प्रकृतिशोभनोमुना नियतं सुशब्द निचयो विधीयते ।।

97 श्रुतिमञ्जुनादनिचयैरभिरामा स्ववलग्ननाभिजघनद्युतिहेतुः ।
किलसन्त्यनन्तस्वरसाक्षि युगाय स्वदते मुकुन्द दयिते तव काञ्ची ।।

98 काञ्चीं मुक्ति क्षेत्रमाहुर्जगत्यां इन्धेचित्रा तावकी देविकाञ्ची ।
अप्यार्याणां योगिनां मोक्षहेतोः चेतो यस्यां बध्यते ताक्ष्यकेतोः ।।

99 लब्धवासमधिकाञ्चि देविसद्रत्नजातमभिजातदीमिकृत् ।
कंस हिंसन कटाक्ष पात्रतां विन्दतीति क इवात्र विस्मयः ।।

00 अल्पादल्पं त्वद्वलग्नञ्चलग्नं वासस्तस्मिन्नर्थतश्शब्दतश्च ।
अम्बस्नेहादम्बरं वीक्ष्य काञ्ची दम्भाद्विद्युत्तत्र विद्योतते किम्? ।।

01 अक्ष्यपदादणुतस्तव मध्या दम्ब रमे वरमम्बरमेव ।
अस्य हि वैभवमस्तविवादं विप्रतिपन्नमनैन्द्रयिकत्वं ।।

02 अणवप्यदस्तव वलग्नमिहाम्ब काञ्चीं

अप्यम्बरं स्तन भरञ्च बिभर्ति युक्तं ।

आहुर्यतो द्व्यणुक कारण मप्यणुं तं

आधारमत्र कतिचिज्जगतोखिलस्य ।

403 कार्श्यं दृष्ट्वा कमलनिलये नेत्रमेकं भवत्याः

दत्तं मध्यं प्रति तव पतिस्तत्र तुस्पर्धयेव

नेत्रद्वन्द्वं रुचिरमदिशत्तद्विचित्रं त्रिनेत्रो

जातोप्येष प्रथयति कथं सम्पदं शम्बरारेः ।

404 पयोजनाभप्रियपत्नि विष्णु पदारविन्दव्यपदेशमेव।
न्रिरीक्ष्य मध्ये नियमेन तत्र नेत्रं मुदा त्वं निदधासि नूनम् ।।

405 नेत्रेण नीरनिधिपुत्रि नितान्तयोगात् मध्यन्नचाक्षुषमिति क्षममेव मातः ।
आसन्नतापि सुतरामतिदूरतेव प्रत्यक्षतां प्रतिरुणद्धि यथाञ्जनादौ ।।

406 अत्यल्प भावात्तव देवि मध्यः हरेः कटाक्षाविषयो यतोऽभूत् ।
अतुल्य कल्याण गुणाश्रयस्यापि अजस्रबन्धोस्य किलानुरूपं ।।

407 सुरासनश्रीप्रथने निदान मुपेन्द्र सन्तोषकृदब्धिकन्ये ।
वलग्नमेतद्रुचिरोरुरम्भा विलग्ननेत्रं कलये वलघ्नं ।।

408 परमाणुषु मातरादिमं यदिदंकोशकृदाह मध्यमं ।
अमरः किल पामरस्ततस्स बभूव स्वयमेव मध्यमः ।।

409 अधिकाञ्चि तथाभिवृद्धिमत्या प्यभिजातः श्रुतिमस्तु शब्दपंक्त्या ।
अतिभङ्गुर एव शून्यवादं नजहौ माध्यमिक क्रमस्त्वदीयः ।।

410 जननि स्मृति जन्ममूलभूतं तनुमध्यं तव सन्तताानुमेयं ।
तदिहोपनतं पुरस्तनाङ्गीकृत सद्वैरव दर्शनानुरोधात् ।।

411 नपरं तव रम्य शीधु मित्रं वचनं पञ्चम भूतमब्धिकन्ये ।
अपि तु स्फुट मेखला कलाप प्रसरच्छब्दगुणोज्वलं वलग्नं ।।

412 प्रबुद्धदीप्तौ प्रबलागमं ते हसत्यशेषाम्ब गुरौ नितम्बे ।
अन्ते वसन् तस्य तु मध्यमोयं स्थाने समातिष्ठत शून्यवादं ।।

413 मकरध्वज राज भद्रपीठं पुळिनं भूषण रत्नकान्ति सिन्धोः ।
जळजायतने पृथुत्वदीयं जघनं यौवन हस्ति मस्तकंवा ।।

414 कामाङ्कुशेन कलित क्षतमच्युतेन पाथोधिपुत्रि पृथुळं जघनं भवत्याः ।
हस्तीन्द्र मस्तकमपूर्वमिदं यदस्याः हस्तावुभौ लसतऊरुमिषादधस्तात् ।।

415 प्राकाशयत्पद्मगृहे मदावहा हरेरनेकाकृति नेत्र सम्पदः ।
शुभोरु रम्भाद्वय शोभितं दिवं जयत्युदारं जघनस्थलं तव ।।

416 करस्थीकर्तुं यां भगवति तवोरुश्रियमसौ
करी नित्यं काङ्क्षत्यभिलषति तामेव कदळी ।
अतस्तामीर्ष्यातः प्रसभममभिमथ्नाति कळभो
द्वयोरेकत्रेच्छा जनयति मिथोद्वेषमधिकम् ।।

417 प्रकृतिस्समदर्शितामृदूनां नितरामुन्नति भाजिनीचकेच ।
प्रथते समता यतस्त्वदूर्वोः करभे देवि करे च कुञ्जराणां ।।

418 करभः कलभप्रशस्त हस्तः कदळी चाप्युरवस्स्युरम्ब कान्त्या ।
ननु तत्र च मुख्य वर्ण दैर्घ्या त्कथयन्त्यूरुपदं त्वदीय सक्थ्नोः ।।

419 तवोरुलक्ष्मीं द्विरदाः करस्थां कर्तुं कृताशा मधुपायमत्ताः ।
दिशन्ति दानं तदपीष्ट सिद्धिं नापन्नपात्रार्पणतोहि नार्थः ।।

420 असावसारोन्तरतीवकर्कशो मलीमसश्चोपरि कौञ्जरः करः ।
इति त्वदूरू हसतो हरिप्रिये करिण्यपास्ते करभस्तुदूरतः ।।

421 विबुधास्तव वर्णयन्ति जङ्घे शरधी दाशरथिप्रिये स्मरस्य ।
नवयं बहुमन्महे तदेत न्नहि पृष्ठीकुरुते मनोभवस्ते ।।

422 प्रमिळन्तु शतानि काहळानां शरधीनां समुदेतु वा सहस्रं ।
कमले तव जङ्घयोस्ततः किं शतमन्धाः किमवेक्षितुं क्षमन्ते? ।।

423 काहलः कमलमन्दिरे भवज्जङ्घयोश्श्रियमचूचुरद्यतः ।
तन्यते बहुमुखप्रभञ्जन क्षोभितेन निनदस्ततोऽमुना ।।

424 तनोतिसिन्धोस्तनयेमनोज तूणीरशङ्कां तव देवि जङ्घा ।
तद्बाणभूतं कमलं तदग्रे पदापदेशेनयदाविरस्ति ।।

425 बृन्देन बृन्दारक सुन्दरीणां नन्देष्टसूनोस्सखि वन्दनीये ।
मन्देतरानन्दथुमूलकन्दे वन्दे भवत्याश्चरणारविन्दे ।।

426 यौ यस्य पादौ यदुवर्य भार्ये तस्यैव दृष्टौ गतिदायिनौ तौ ।
चित्रं तदेतच्चरणौ तवेमौ गजेन्द्रयोग्यान्दिशतो गतिञ्च ।।

427 नळिनायतने नवं प्रवाळं पदयोस्तावकयोर्लवं प्रतीमः ।
अत एव बिभर्ति पल्लवाख्यां भजते पादप शब्दमस्य पाता ।।

428 पदयोर्द्वितयं ननु त्वदीयं भजते स्वामिनि बालमित्ररागं ।
अथ पल्लव रूपमश्नुते तत् प्रतिषेधन्ति हि बालसख्यमार्याः ।।

429 यद्वस्तु यद्गुणवता कलितानुषङ्गं तत्तद्गुणीति विदितं तव पादपद्मे ।
अत्यन्तरागिणि कृतं हृदयं मुनीनां वैराग्यमेव भजतीति विचित्रमेतत् ।।

430 पादान् सहस्रमपि बाल सरोज बन्धोः
पादद्वयी जयति ते जगदम्ब दीप्त्या
बंहीयसामपि च सद्वसु हारकाणां
प्रायो जयः कुवलयार्तिकृतां कुतस्स्यात् ।

431 नवप्रवाळादपि कोमळं ते नवन्दते कश्चरणारविन्दं? ।
शनैर्नैषीद्दृषदं यदम्ब स्पृशन् स्मराङ्कं भगवान्विवाहे ।।

432 शुभतर लाक्ष मब्ज सुषुमायतनं जगतां
जननि शुचिद्विजैः श्रितमिदं पदमास्यमपि ।
परमियती भिदा प्रथममभ्युदयं दधता-
त्वहिम रुचासमं हिमरुचा चरमं चरमे ।।

433 प्रद्वेष्टि यः पादरुचिं तवाग्र्यां तमिन्दिरे द्रष्टुमयोग्यमाहुः ।
दृष्टान्तमत्र प्रतिषिद्ध दृष्टिमुद्यन्त मादित्य मुदाहरामः ।।

434 नवर्णतः केवलमीप्सितार्थ दानादपि त्वच्चरणौ सुरागौ ।
श्रियैव नोदञ्चित पद्मजाताविमौ जगत्पूज्यतयापि मातः ।।

435 अजेन्द्र भर्गादि सुरव्रजेडिते भजेतव क्षीरधिजे पदाम्बुजे ।
व्यनक्ति सक्तं यदलक्तकं हरे स्तस्तटे तस्य परत्वमुच्चकैः ।।

436 उदारसन्देहमुषं वितन्वती मुदारसन्देह भृतां चिदात्मकं ।
सदारविन्दे व्युदयन्तमिन्दिरे पदारविन्दे हसतश्श्रिया तव ।।

437 अपि नीरज स्फुरणहार्यहो रजस्फुरणापहारि पदयोर्द्वयं तव ।
अपिहंसक प्रणयिधूतहंसकं गमनेन पद्म भवने विशोभते ।।

438 कौचिदंघ्रिकमले तव श्रितौ कंसहिंसनपुरन्ध्रिहंसकौ ।
मञ्जुळैरखिलरञ्जकौरुतै र्मानसे विहरते मधुद्विष: ।।

439 राजच्छोभनखाश्रितं शुभकरं राजीवराजी सुहृत्
पद्मे गाढतमोहरं तव पदं बालार्कबिम्बञ्च तत् ।
यद्यप्यम्ब समं तथापि विदितो भेदस्त्वियानेनयो:
अर्घ्यं संस्कृत मुत्तरस्य कल्पयन्त्याद्यस्य पाद्यं बुधा: ।।

440 तव भगवति वन्दे दिव्य पादारविन्दे सदसियदभिषेकं शम्भु जम्भारि मुख्या: ।
स्वमकुट घटितस्वश्शाखि निष्पन्नपुष्प प्रसृमरमकरन्दै रन्वहं तन्वते ते ।।

441 प्रणतिषु तव पुण्यद्वन्द्वमासीत्पुरारे: प्रणिपतनत एकं लोकमातस्त्वदंघ्र्यो: ।
चिरविरह कृशस्य स्वावतंसामृतांशो: तव नख मय तारा योजनेन द्वितीयम् ।।

442 चरणनळिनयुग्मं संसृतिक्लेशसिन्धो: तव हरिसखि सन्तस्तारकं सङ्गिरन्ते ।
इदमुचितमवैमो येनतत्संश्रितानां ततिरपि च नखानां तारकत्वं दधाति ।।

443 अनिशंप्रकाश मधिगन्तुमिच्छया तव भाति सिन्धुतनये पदाम्बुजं ।
अधिगम्य नूनमभवन्यतोनखानि अत एवखञ्च तदभून्नभस्थलं ।।

444 [illegible] सुरद्रुमश्रीरपि विद्रुमश्री: ।
खरांशुकान्ता नखरांशुकान्तापि अम्बद्वयीयं तव चित्रमंघ्र्यो: ।।

445 चरणाविमौ हि करुणानिधे यत: तरुणारुणाग्रकिरणानुकारिणौ ।
अनुविन्दतस्तदरविन्द बन्धुतां अपि साधुचक्र बहुमान्यतां रमे ।।

446 पद्ममाश्रितस्तव पयोधिकन्यके विपदन्नजातु भजतीति साम्प्रतं ।
अपितत्परागमधिमौळि धारयन् अपरागतां व्रजति जन्तुरद्भुतम् ।।

447 श्रित: परागं जरदश्शशाङ्को दृष्टेनतत्त्र्यम्बक शीर्षगश्श्री: ।
स्पृशन्नपि त्वत्पदयो: परागं नजातु तारुण्यमहो जहाति ।।

448 सुरादिमान्यं विधुतोपसर्गं शुभावहं ते मृदुचारुवर्णं ।
पदं रमे य: प्रणमेज्जपेद्वा दूरादपास्य [illegible] ।।

449 पादं त्रपादं तव पङ्कजानां वन्दे भवन्देवि तरीतुकामः ।
मस्तेसमस्तेऽपि मञ्जुळाक्षा रागंपरागं वहते यदीयं ।।

450 पदद्वयं यस्तव देवि सेवते प्रभुश्श्रितानां द्विपदो भवत्यसौ ।
विधुस्वसस्तद्विमुखस्तु योनरश्चतुष्पदं हन्त वदन्ति तं बुधाः ।

451 पदयो स्तवाम्ब रागं प्राहुस्स्वाभाविकं वयं त्वेनं ।
पुष्कल राग प्रियतमहृदयवसत्युपनतं विजानीमः ।।

452 परमकरावळिरम्या बहुरागधराधरोरु विभ्रम भाक् ।
असिहंसहारि गतिका पद्मे पितृवत्पितृप्रसूवच्च ।।

9. श्रृङ्गारस्तबकः

453 दुर्ज्ञेय महिमा सा मां दुग्धाब्धिदुहितावतात् ।
शृङ्गाररस सर्वस्वं शेषशैलेश्वरस्य या ।।

454 विहितस्मरसौरभेण पद्मे विविधेनाम्ब विलास चेष्टितेन ।
अतिविस्मयमादधासि शौरे रनुभूतापि चिरादपूर्ववत्त्वं ।।

455 कमले तव हन्त वीक्षितानां कुटिलिम्ना कबळीकृतं सदापि ।
फणिशैलपतेर्नजातु चेतः प्रतिघोपघ्नमुपैति वक्रिमाणम् ।।

456 विषमायुधास्त्र सुषुमावहैरहो तव लोकमातरवलोक विभ्रमैः ।
भगवानहीन्द्र नगवास्युपाश्नुते तरसा मनोज्ञतरसात्विकश्रियं ।।

457 कलशाब्धिपुत्रि वलशासनादिभिः निगमैरनादिविगमैरपि स्तुतः
छलहेतुकेषु कलहेषु केशवः सभिया तवैक मभियाचते वचः ।।

458 स्तम्भतस्स्वय मवाप सम्भवं यः पुरा नरहरिर्हरिप्रिये ।
शम्बराहित विलास डम्बरै स्स्तम्भममम्ब जनयत्ययं त्वयि ।।

459 अहारिनेत्रं मम पश्यतोनया प्रसह्य चोरस्थल सत्तयेतिकिं ।
प्रतिक्रियायै हरतेरतेषुते हरिर्हठादम्बरमम्बरंहसा ।।

460 अम्ब त्वमत्यन्तमुदारतोरुचमत्कृतिं दर्शयितुं प्रियाय ।
अभ्यर्थयित्रे भृशमात्मनोपि कुचेलमित्राय ददासि चेलं ।।

461 बहिस्त्वाळीवर्गं स्तवनकरतो देवि परिणी

करग्राहोन्मीलद्वलयरव शुश्रूषु रुषितः।

प्रियस्पर्शानन्दोन्मिषित भवती हस्तनिभृतैः

कळध्वानापेतैः कनकवलयै र्वञ्चित इह ॥

462 हठात्क्रीडायुद्धे हरिसखि भवत्याः कचभरे

गृहीते कान्तेन ग्रहिळहृदयः काममदयः।

मनोजन्मामर्माविधमथगळत्पुष्पकपटात्

अवर्षद्बाणौघं प्रसभमुपरिष्टान्मधुरिपोः ॥

463 आख्यया च महसा हरेः करस्पर्शनेन मृदितः पयोधरः।

देवि विक्षिपति ते स्रगुद्गलत्पुष्पमौक्तिक मयान्पयः कणान् ॥

464 सरभस परिरिप्सा सम्भ्रमोच्छूनपीन

स्तन शिथिलित बन्धामशुळा कञ्चुळी ते।

अतनु समरकेळावप्रयत्नात्प्रियेण

द्रुततरमपनीता दुग्धसिन्धोस्तनूजे ॥

465 हरति तदिदमुच्चैर्हन्त चक्रावलेपं दिशति जननि खेदं मध्यदेशस्यचेति।

मदनयुधि कराभ्यां मर्दितं युग्ममेतत् कुच धरणि भृतोस्ते कुप्यते वाच्युतेन ॥

466 कठिनमुखनख क्षतानि शौरेः करयुग निर्दय मर्दनानि चास्य।

भगवति सहमानयोः प्रकामं तवकुचयोरुचितं क्षमाधरत्वं ॥

467 भीतं शीतकराद्रथाङ्ग मिथुनं नित्यानुषक्त्याशया

मातर्व्यातत तावक स्तन जनिं मानात्पुनश्चन्द्रमाः।

त्वत्प्राणेशनखात्मना कृतजनिस्तत्र प्रदत्ते क्षतं

वैरं हन्त विरोधिनोः किल मिथोजन्मान्तरेप्यक्षतं ॥

468 सन्त्यज्य सुन्दरि सुदर्शन पाञ्चजन्यादि एकेन कण्ठमितरेण करद्वयेन।

संगृह्णतस्तव कुचौ च मदम्ब शौरेः नो शङ्खचक्र धरता विरतारतेऽपि ॥

469 भावत्कमाचरति देवि हरावपूर्वं पाणिग्रहं विजनकेळिगृहं प्रविश्य।

लाजायितं विमृदितस्तन लोलहार व्याकीर्ण मौक्तिकचयैर्ज्वलति स्मराग्नौ ॥

470 पञ्चायुधान्यपि विहाय तवाङ्केषु सञ्चारयन् स चतुरश्चतुरस्स्वहस्तान्
कञ्जालये कथमहो मधुकैटभारिः पञ्चायुधाजिमपि हर्षभरादकार्षीत् ।।

471 क्रीडारणे तव कृतापजयस्स्मरेण सन्त्याजितेष्वपि च शार्ङ्गमुखायुधेषु ।
कल्याणि कंसदमनः कमले विचित्रं उत्तुङ्ग चापलतया ननु योजितोऽभूत् ।

472 उपमर्दितयोरुरोजयोस्ते दयिताश्लेषदशासु मौक्तिकानां ।
तव चन्दनरेणु निर्विशेषं परिणामं प्रतिपेदिरे परागाः ।।

473 मायावादस्तव तु वशिते देवि मध्वार्तिकारिणि
अङ्गाभ्यां वां विघटितमभूत् द्वैतमालिङ्गनेषु
आभिर्मुक्तावलिभिरचिरादाश्रितं निर्गुणत्वं
व्यक्ता चान्तः करणहरणात्ताहृगानन्दपूर्तिः

474 जलजायतने समस्तनागप्रवरप्रौढ निबन्धन श्रमेण ।
प्रियपाणिनियन्त्रणोचिताया स्तवकण्ठादुदितास्तदा सुशब्दाः ।।

475 योगे पयोधितनये युवयोस्तदानीं
शम्पा लता जलदयोरिव सम्प्रवृत्ते
उज्जृम्भितातनु शुभाशुगवेगनीता
व्यक्तं श्रमाम्बुकणिका मयवृष्टिरासीत्

476 चलद्गुणेष्वत्र पयोधिजातेष्वत्रासमुक्तावळिषु प्रकम्पः ।
रमे सदा राजकराम नानाहारेषु युक्तोऽतनु युद्धकाले ।।

477 गाढं श्लिष्यति माधवे सकुतुकं क्रीडावनीं त्वां तदा
युक्तं चम्पक गर्भ सौरभ शुभैरस्पन्दि मन्दानिलैः ।
राजीवोपरि पर्यपाति सहसा लोलै रळीनां कुलैः
आसीदम्बकदम्बगोळनिचयो यस्मादतो विस्मयः ।।

478 प्रसभमरुणबिम्बं ग्रस्तमासीदकस्मात् परिपतितमुडूनां पंक्तिभिर्मेरुशृङ्गात्
अपि तिमिर कृता भूदिन्दिरे चन्द्ररेखा तव च मधुजितश्च द्वन्द्वयुद्धे प्रवृद्धे

479 वपुषि मृदुतमे ते वेदनामाजनीति प्रशिशमयिषितापि प्रेयसा माधवेन ।
विपुलपुळकपाळी विश्वमातस्त्वदङ्गे तव दृढपरिरम्भा त्स्वैरमुन्मेमिषीति

480 मधुमथन मनः प्रहर्षहेतोः मनसिज यज्ञमनेकधा विधाय।
धुवमवभृथमज्जनं भवत्या जननि कृतं शुचिभिश्श्रमाम्बुपूरैः ॥

481 सायासायास्सुरतविरतौ कान्त बाह्वान्तराळे
विन्यस्यास्यं तव भगवति स्वापसौख्यं भजन्त्याः।
फालोत्पन्न श्रमजलमिष चित्रकप्रस्रुतोऽस्मिन्
श्रीवत्सोऽन्यस्स भवति रमे यस्तु कस्तूरि बिन्दुः ॥

482 सञ्जातं नयनयुगे निरञ्जनत्वं नीरागस्स्फुटमभवत्तवाधरेऽपि।
सम्पन्ना जननि कचेऽपि बन्धमुक्तिः सानन्दं रहसि हरेरुपासनेन ॥

483 मलय मकुटी वाटीपाटीरकोटरनाटिनः
सरसिज मधुस्यन्दामन्दाघमर्षणहर्षिणः।
तव रति भवं लुम्पन्त्यम्ब श्रमं शयनी भवत्
फणिपतिभिया मन्दं मन्दं चरन्त इवानिलाः ॥

484 वनजनिलये वारिक्रीडादशासु दशानन
द्विषि तवशनैरातन्वाने कुचे नखचेष्टितं।
क्षुभितमनसा दत्ता नाथे त्वया शफरीभिया
सरभसपरीरम्भारम्भाजयन्ति निरन्तराः ॥

485 सरसिजवने संलीनाया स्सकौतुकमिन्दिरे
सलिलविहृतौ शौरे र्लोलेक्षणस्य मुखस्य ते।
अळिकवलितालोल श्यामाळकस्य सरोरुहात्
अळिकबळिता च्छैवालाद्वयादभून्नभिदाग्रहः ॥

486 युगपदहिमही भृत्युन्मिषन्तं समन्तात् ऋतुगणमपि कृत्स्नं निर्विशन्निर्विशङ्कः।
सह विहरति लीलालाभवत्या भवत्या ममजननि मुकुन्दो मञ्जुवल्ली गृहेषु ॥

487 कुसुमशर धनुर्ज्या तुङ्गटङ्कारशङ्का करमधुकरसङ्गारब्ध झङ्कारहृद्यान्।
फणिगिरिवनदेशान्पद्मनाभस्स पद्मे सकलयति गभीरस्त्वत्सहायो विहारैः ॥

488 साकं लेकपतिस्त्वया विहरते काकोदराद्रौ रमे
सूनेषोरवने वने नयनयो रानन्दने चान्दने। -

शम्पाश्लिष्ट नवाम्बुद भ्रमजुषामङ्क चिरं केकिनां
नृत्ताडम्बरनुन्न पन्नगतया निर्दोषमन्दानिले ॥

489 कान्तोरन्तुमनास्त्वया सह रते कामेन मुह्यन् हरिः
श्यामं केळिवनीमियंस्त रजनौ दूरीकृतार्कद्युतिं ।
सन्ध्यारागमयेषु पल्लवगणं तत्कोरकास्तारका-
-पर्यन्तस्सन्तमसं लसन्मधुकरश्रेणीञ्चनाणीयसीम् ॥

490 त्वन्नाथाख्या वहनविहृदी भूतत्दास्य दार्ढ्यं
किञ्चित्कृत्या कलयितुमिवाकाङ्क्षता माधवेन।
पत्या साकं प्रणयकलहं तावकं छेत्तुकामे
कामे देवि स्वयमुपवने तन्यते बाणदानम् ॥

491 सोयं गायन्स्मरमनुमळि श्शश्वदव्याद भव्यात्
संपश्यन्ती यमिह कबरीसौरभाद्दापतन्तं।
जातोद्वेगाजगदधि भुवे चित्रमप्रार्थितापि
स्वैरं दत्से सरभस परीरम्भमम्भोधिकन्ये ॥

492 मन्दं मन्दं वृषगिरितटीं स्वैरमाटीकमानः
खेलं खेलं विमलहरिणांकानने काननेषु।
ग्राहं ग्राहं मृदुसुमनसः कौतुकी कैटभारिः
वारं वारं तव वितनुते देवि मूर्धाभिषेकं ॥

493 रागेणोपर्यनिशमुषितं पुष्पवत्या लतायाः
प्रीत्या गृह्णन्कमपि कुतुकी पल्लवं फुल्लवक्त्रः।
सान्द्रामोदं चिकुरसुमन स्सन्निधानेन नीत्वा
शार्ङ्गी हन्त श्रुति शिरसि ते स्थापयत्यब्धिकन्ये ॥

494 दत्तेमातस्तवकिलमुखे पाणिनादुर्निवार
स्वेदेनासौ कमपि तिलकं कौतुकी श्रीनिवासः।
त्वन्तुस्वेदस्रुतिविघटित स्थानविन्यासमेनं
वीक्ष्यादर्शेहसिस दयितं मोघयत्नं विदग्धा ॥

495 शेष क्ष्मा भृत्तटवनचर श्याम जीमूत संघे

संलीय त्वां भ्रमयति हरिः कल्पिताभेदमोहः।

तास्मिन्विद्युत्पटल जटिले तं विचेतुं विशान्त्या

व्यावृत्तिन्ते विशदमविदन्सस्वयं वञ्चितोऽभूत्॥

496 बाले देहि पयोधरं करयुगे प्रावृट्त्वयायाच्यतां

आश्लेषाभिरुचिं विधेहि न शशी तस्यास्मि किन्तुस्वसा।

आस्तामुत्तरमेतदीदृगधरं याचामि वाचास्वयं

नास्त्यर्थोऽधरयाचनयेति चटुभिः पद्मेधिनोषि प्रियं॥

497 पश्चादुपेत्य परिहासकृते कराभ्यां दृष्टी तवाम्ब विपुले स्थगयन् सशेषं।

पाणिद्वयं मम न कृत्स्न पिधानकेळौ पर्याप्तमित्यहिगिरिः पतिरिति लज्जां॥

498 तव लोक मातरवलोक वागुरा मृग जाल दृष्टियुजाड्यकृद्गुणा।

ननु भाति चित्रमनुभावमाश्रिता हरिणापि तत्र हरिणायितं यतः॥

499 स्मितचन्द्रिकया कयापि देवि स्मर संवृद्धिपुषा सदोन्मिषन्त्या।

मधुसूदनमानसेन्दुकान्ते द्रवतां चन्द्रमसस्स्वसस्तनोषि॥

500 तव स्तनं शैलघनं विनोदा त्प्रसह्य गृह्णन्प्रभुरब्धिकन्ये।

पुरा मुरारि स्स्वकरोद्धृतस्य गोवर्धनस्य स्मृतवान्महाद्रेः॥

501 वल्ली तमालमिव विद्युदिवाम्बुवाहं माहेन्द्रनील भवनं मणिदीपिकेव।

इन्दोःकलेव गगनाङ्गणमिन्दिरे त्वं आश्लिष्यशौरिमयसे महतीमभिख्यां॥

502 मदन तरु फलुवानां मधुसूदन मानसाळि कुसुमानां।

तत्कृत तपः फलानां तव ललितानां जननि कस्स्तोता॥

## 10. ऐश्वर्य स्तबकः

503 विश्वस्य जननीमेव विश्वस्य शरणं वृणे।

विश्वम्भरसमैश्वर्यां विदुर्यां ब्रह्मवादिनः॥

504 अनुपाधिकमम्ब ते मुरारे रपि साधारणमाहुरीशितृत्वं ।
स्फुटमत्र निदर्शनं प्रतीमो ननु मित्रावरुणादि देवतात्वं ॥

505 अविशेषमशेष शेषिभावं युवयोर्यद्यपि वर्णयन्ति सन्त: ।
तनये जलधेर्मिथ: प्रतीतस्तदपि स्वामिनि शेषशेषि भाव: ॥

506 तुल्येपिते नाथविशेषणत्वे व्यक्तं गुणादस्ति विशेष एष: ।
प्रत्यक्त्वमब्धे: तनये भवत्या: प्राज्ञा गुणानाञ्च पराक्त्वमाहु: ॥

507 संसाराब्धौ मज्जतां सज्जनानां रक्षायज्ञे दीक्षितो राक्षसारि: ।
अम्भोराशे: पुत्रि पत्यास्तवासावन्वारम्भन्नित्यमेत्यम्बुजाक्ष: ॥

508 अस्येशानेत्यागमस्तावदास्ता मैश्वर्येस्मिन्नस्मदम्ब त्वदीये ।
जागर्त्येव व्यासताताप्रणीतं श्लाघ्यं विष्णोस्तत्पुराणं प्रमाणं ॥

509 जल्पाकास्ते जीवकोटि प्रवेशं स्वल्पप्रज्ञा ये रमे कल्पयन्ति ।
विश्वं व्याप्तं विष्णुनाम्ब त्वया चेत्युक्तिस्तान्प्रत्युन्युत्तरं शक्तिसूनो: ॥

510 वेदोद्याने पारिजातायमानं श्रीसूक्त न्तज्जायतां श्रेयसे न: ।
पारेवाचां भासुरं त्वत्प्रभावे चक्षुष्मन्तो देवि येनैव सन्त: ॥

511 दम्पत्योरिहयुवयोरधीश्वरत्वं व्यासज्यस्थितमिति सङ्गतं मतं न: ।
विश्वाम्ब श्रुति कथितं विहाय पत्नीं कर्तृत्वं क्रतुषु न केवलस्य पुंस: ॥

512 दत्ताशयासु भवतीमहिमोपदेशे तत्तादृशीषु निगमान्त सरस्वतीषु ।
नारायणप्रियतमे निखिलाभ्युपेतं रामायणं ननु जयत्युपबृंहणं न: ॥

513 एकग्रीवैर्निगमशिखरैरिन्दिरे निर्विशेषं
विश्वव्याप्तिर्जननि युवयोर्व्यक्तमुद्घुष्यमाणा ।
ज्ञानद्वारा तव मधुरिपोरात्मनैवेत्यळीका
वैषम्योक्ति: कुत उपनता हन्तकेषाञ्चिदेषा ॥

514 वैभवं तव मुकुन्दपत्नि या वेदवेदशिखरानुवर्णितं ।
वैभवं भुवि स विन्दति स्थिरं दुस्त्यजं त्यजति वै भवं तत: ॥

515 ऐश्वर्यमत्र मधुहन्तुरपह्नुतेयो यो वा तवापि जगदम्ब तयोरुदीच्य: ।
प्राच्यात्प्रदुष्यति विशिष्य पितृद्विषोपि मातृद्विषस्त्रिभुवने महती हिगर्हा ॥

516 श्रीमद्रामावरज सरणिं श्रेयसीमाश्रितानां

आचार्याणामपि च कुहचिद्यस्त्वणुत्ववादः।

तस्याकूतं परमपुरुषापेक्षया तेऽधिकन्ये

शेषत्वेन स्वत उपनत न्यूनतायां प्रतीमः॥

517 राजन्वन्ति जगंत जगन्ति निगमो द्वाभ्यां युवाभ्यामपि

द्वैराज्यं नहि तावता प्रसजति क्षीराम्बुधेरात्मजे।

आग्नावैष्णव शब्दभाजियजनेऽधिष्ठानयुग्माश्रितां

एकामेव हि देवतां सुमनसश्शंसन्ति मीमांसकाः॥

518 रामाकारे जनकतनया रुक्मिणी कृष्णरूपे

भर्तुः कृष्णाजिनमुपगता ब्रह्मचर्येऽपि पद्मे।

अन्तर्यन्तुस्सकल जगत मच्युतादच्युतांत्वं

धत्से मूर्तिं तदिह युवयोः प्रस्फुटो नित्ययोगः॥

519 पदव्यां भव्यायां कृतरुचिरमार्गं परिहरन्

अकम्पं विस्रम्भं विदधदभिरक्षेदयमिति।

व्यवस्यन्गोप्तृत्वं व्यपसरदुपायान्तरकथः

भवत्या संश्लिष्टे भगवति निदध्यान्निजभरं॥

520 न्यासक्रिया करण मन्त्र पदानुरोधात्

उद्देश्यमात्महविषि स्वयमर्प्यमाणे।

वाराशिपुत्रि भवती विशिनष्टि नाथं

यागे महेन्द्र मखिलाम्ब यथा महत्वं॥

521 इच्छार्जित बहुदेहा मिन्द्रादि पदप्रदाक्लोकलवां।

ईशानां भुवनानामीडीमहि नियतमिन्दिरे भवतीं॥

## 11. क्षान्तिस्तबकः

522 त्रायतामायताक्षं तद्धाम तामरसालयं।

मदागसां प्रतीकारो महतामपि यत्क्षमा॥

523 अपराधपरम्परा मपारा महमेवं यदि नाम नाचरेयं।
कमलायतने क्षमागुणस्ते कथमात्मानमसौ लभेत मात: ।।

524 महतां मम घोरकिल्बिषाणां इहनिर्वेशगवेषणापि दूरं।
पततामवलम्बनाय मात र्भवपङ्के बत नस्तव क्षमात: ।।

525 फणिशेखर शैलनाथ कान्ते भवती मूर्तिमती क्षमैव नूनं।
अभवत्कथमन्यथा न पापस्तव कोपप्रभवाय वायसोऽपि।।

526 भवतीं प्रतिविश्वमातरं भवसिन्धोस्तरणार्थमातरं।
स्वमहं प्रदिशामिरक्षमा मपराधेषु समाचरक्षमां ।।

527 मात: क्षमा तव सखी मधुवैरिकान्ते ख्यात: क्षमाधरतया निलयस्सशेष: ।
त्वन्तु क्षमानिधिरतश्शतमागसां मे क्षन्तुन्तवोचितमशेषत एव तावत्।।

528 नित्यं त्वकृत्यमवशादपि न त्यजामि कृत्यं घुणाक्षरनयादपि नाचरामि।
अत्यन्तमित्थमपराध महोदधेर्मे सत्यं शपे शरणमम्ब तव क्षमैव।।

529 अस्मत्कृतामतितरा मपराधपंक्तिं यन्मृष्यसे जननि तत्र न विस्मयो न: ।
एवंविधोपि विलिलङ्घयिषे भवं यत्तत्र क्षमा हि तव कस्य न विस्मयाय।।

530 तत्तद्विचित्रदुरितानुगुणानि तीक्ष्णे दातुं फलानि दयिते तव बद्धदीक्षे
कस्येह जीवितकथा कलशाब्धिकन्ये क्षान्तिं न चेन्नयसि तं विविधैरुपायै: ।

531 अक्षान्तकारिणि दशास्यवधोक्तिहमे भक्षाय राक्षसवधूरभियाचमाने।
हन्तक्षमोदयजुषोप्यनुकम्पयैव नक्षत्रनाथसहजे तव न क्षमाभूत्।।

532 धनपति पुरुहूतस्थाणु वेधो मुखाना मपि चददधाति शम्पं सम्पदस्सम्प्रदायं।
इति गतिमवबुध्याप्यर्थकामाभिलाषा दजहदघशतंमां रक्षमात: क्षमात: ।।

533 अनिशमुपचितानामागसां भूयसां मे निगमविततिरीष्टे निष्कृतीर्नाभिधातुं
प्रभवति फलमेषां पद्मनाभो न दातुं कलशजलधिकन्ये क्षान्तिरेवेह युक्ता।

534 अमित दुरित कृद्भ्यो नित्यमस्मादृशेभ्यो

हतहितचरितेभ्यो हन्त कुप्यन्तमुच्चैः ।

नियतमनुगुणेन न्याययुक्तेन पद्मे कलयसि वचनेन क्षान्तिमन्तं प्रभुं तं ॥

535 कलयति मनसा वा कर्मणा वा गिरा वा

मधुरिपुमहिळे यन्मादृशो नित्यमागः ।

तदिदमगणयन्ती त्रायसे संसृतीर्नः

शरणमिति गिरैव स्वामिनं क्षामयन्ती ॥

536 नवनवमपराधं साधयित्वाखलत्वात्

जननि कृतवतो मे माधवं क्रोधवन्तं।

करुणनिलयकन्ये क्षान्तिमत्या भवत्याः

शरण वरणतोन्यत्केवलं नावलम्बः ॥

537 प्रथित तमसि सर्गैरागसां रागसान्द्रे

मयि यदि तु विधत्से नानुकम्पामकम्पां।

उपचितिमतिचित्रा मेनसोमेनसोढुं

प्रभवति स भवत्या नायकोऽजेयकोपः ॥

538 रचयति यदयं ते नेतरागस्सरागः

तदखिलमपि मृष्यन् त्राहि दीनं त्वमेनं।

ननु क इह विमर्शो नापराधीति शौरेः

कलशजलधिकन्ये कर्णयोर्वर्णयोच्चैः ॥

539 जलजटिलतटित्त्वद्दीप्ति कृष्णोपलाळ्या

कृतिरुरुकटकश्रीरुज्वलन्मेखलाभा ।

वरतम वनमालालंकृतस्थान जुष्टा

वहसि हरि पुरन्ध्रि त्वंक्षमाभृत्त्वमर्हं ॥

540 पापारण्य हिरण्य दानववपुर्व्यापाटनप्रज्वलत्

कोपाटोपकृपीडसम्भवनवज्वालाकराळाननं ।

देवाद्यैरपिदुष्करप्रसदनं देवं नृसिंहं रमे

क्षान्तिं नीतवती क्षणेन भवती किं ते परं दुष्करं? ॥

541 नियन्ता यः पद्मे निरवधिदुरागः शतकृतां

अपर्यापंजानात्यखिल निरयव्रातमपि न

स एष त्वद्वाचा सकलमपि सोढवापचरितं

फलं वेत्तिस्वल्पं तदपि शरणोक्ते र्निजपदं

542 क्षमां मूर्तामुद्यत्करचरणयोगाञ्चकरुणां

हतावद्यां विद्यामवयववती मम्ब भवतं

समाश्रित्यापत्याभ्युदय धन धान्यादि निबिडः

विडौजस्सम्पत्तिं परिहसति भूमावपि जन

543 क्षान्ते मन्तौ जननि सकले क्षम्यतां शब्दमात्रात्

भू यो भूयः कमपि निचयं पाप्मनां निर्मिमाणः

वक्तुं लज्जे पुनरपि सहस्वेति वाराशिकन्ये

क्षान्तिं सा त्वां तदपि नयते काप्यकम्पानुकम्पा

544 कादाचित्क प्रपदनजुषां कांक्षितान्पूरुषार्थान्

अत्रामुत्राप्यखिलजननि प्राणिनामर्पयन्ती

सन्त्यज्य त्वामपकृतिशतैरप्यशुष्यत्कटाक्षां

भिक्षार्कीतु प्रसभमपरां देवतां सेवतां कः?

545 कृत्याकृत्य त्यजन करणोत्साहिनां मादृशानां

कोवादोषः कमलनिलये त्वत्क्षमायास्सदोषः

येनैतस्याः क्वचिदविषयो नापराधस्समस्तीति

उद्यद्धैर्यावय मतिबहूना चरामोऽपचारान्

546 अशेषैर्निर्विशैरखिलनरकावळयनुभवैः

अघौघानास्माकानपि भृशमशक्यापनयनान्

क्षमस्वेत्युक्त्यैव क्षपयति मधुध्वंसिदयिते

क एषः क्षान्त्यात्मा कथय निरुपाख्यस्तव गुणः।

547 निर्मातुं प्रभवेम कर्म नवयं नित्यं किमप्यन्ततो

यत्खल्वाचमनं तदप्यकुशलाः कर्तुं यथाचोदनं

दूरेज्ञानकथातथापि तु तवाक्षामक्षमावेदिन:

जानीमो नमसैव देवि सुगमौ स्वर्गापवर्गावपि ।।

548 कथयामि सारमिह किं कथया परमन्ययार्थित भवोपरमं ।

क्षमयात्वमेतमभिरक्ष मयाविहितानि मागणय देविहिता ।।

549 निगमविहित प्रायश्चित्तं मदीयमहांहसां

निरसनकृते नालं मातस्तव क्षमया विना ।

गुरुतरमय: पिण्डं गर्वान्निगीर्ण[illegible] रमे

किमु जरयितुंशक्तं शुण्ठीकषाय निषेवणं? ।।

550 भगवति वपुश्चेतो वाग्भि: प्रतिक्षणमार्जितं

नवनवमिमं पापस्तोमं क्षमस्व ममस्वयं ।

कटकटरवक्रीडद्दंष्ट्रायुगी विकृताननं

पुनरपि यथा नो पश्येयं भयङ्करमन्तकं ।।

551 सहमानाऽहरहर्मे सहस्रमागांसि सागरेन्द्रसुते ।

स्थापयसि मां दयाळो शरणव्रज्याधिराज्य पीठे त्वं ।।

## 12. उत्सव स्तबक:

552 विख्यात विभवा सा मां विष्णुपत्नी विलोकतां ।

विपुलान्युत्सवान्यस्या विरिञ्चाद्या वितन्वते ।।

553 विधिशिव प्रमुखा विबुधेश्वरा विविधमच्युतपत्नि तवोत्सवं ।

अकलयन् सकलस्य शरीरिणो निरवधीरवधीरयितुं व्यथा: ।।

554 निरुपमं युवयोश्शुभमुत्सवं जननि लोकयितुं धृतकौतुका: ।

उपगताकिल कापि परा त्वरा पुरवधूरवधूतगृहक्रिया: ।।

555 जननि सत्वर चंक्रमसम्भ्रमे चरणत: पतितौ मणिनूपुरौ ।

तव महोत्सव भूमजनोन्मिषत्कुतुकया तुकयाचिदनादृतौ ।।

556 तव महे गतिमान्द्य कृतौ कुचाविति रुषा चलिताशु रमे परा ।

अनुगृहीत तदञ्चलनिर्गळन्नवसरावसरात्ययभीरुका ।।

557 श्रुत भवन्महवाद्यरवाजवात्पथि रमे चलिताभरणस्वनैः ।
श्रुतरुतेऽन्तरितेऽस्मिसुवञ्चितेत्यपरया परया हसिता वधूः ।।

558 महमही भजनोत्कलिकाकृत द्रुतगति श्लथ पुष्पसरापरा ।
कृतवतीव मुदा कुसुमाञ्जलिं तव रमे वर मेखल मध्यमा ।।

559 महजुषस्तवदेवि सिसेविषा दिशति मन्दगतेरपि सद्गतिं ।
तदिह दिव्यगतिं वितरिष्यसि त्वममलेम्ममलेखधुरास्पदां ।।

560 अभिचकाङ्क्ष मनः प्रभवंजवं चरणयोरपि काचन सादरा ।
कलयितुं भवतीं कलशाम्बुधेर्दुहितरं हितरम्यमहोत्सवाम् ।।

561 जननि नाम्नरसोदर सोदर श्रियमवेक्ष्यसविस्मय मुत्सवे ।
नततृपुर्नरदेवत योषित श्शुभवतीं भवतीं सह शौरिणा ।।

562 प्रियतमार्पित यावक पादया तव महोत्सव भूर्नययास्त्रिया ।
द्रुतमगामि पदो र्नपरं धृतः कुपितयापितयारुणिमा दृशोः ।।

563 अभिवृषाचलमापततां द्रुतं तव रमे परमोत्सव लिप्सया ।
अजनि नो पथिभिस्समयात्ययो दिविषदां विषदान्तरितैरपि ।।

564 प्रसृमरागरु धूपपरम्परा सुरभिताश्शुभदीपशतादृताः ।
त्रियुगपत्नि तवोत्सव भूमयस्सुरचयं रचयन्ति सविस्मयं ।।

565 तव मह प्रतिनन्दन कम्पितै स्सुरतरोश्शिखरै स्स्वय मर्पिताः ।
जननिवेङ्कटशैलमभूषयन् सुमनसो मनसोहरण क्षमाः ।।

566 शुभतराभरणाभरणात्मना रुचि तरङ्ग पिशङ्गित सद्मना ।
जननि सार्थयसे मरुतां महोत्सवपुषा वपुषानिमिषादृशः ।।

567 मधुजिता सममुत्सवमण्टपे स्थितवतीं भवतीमवलोकितुं ।
अभिरुचिः पुनरात्तकुतूहलैर्निजगृहे जगृहे न वधूजनैः ।।

568 अधिमहोत्सव मर्णव कन्यके परमभक्तिजुषां प्रणतिस्तव ।
तनुधनुर्लतया सुदृशां गुरुस्तनतया नतया सुकरा भवत् ।।

569 भजनहर्षज नाट्यजवोच्चल न्मकुटलोल मरुत्सरिदुत्थितैः ।
जलकणैर्भवदुत्सवमेदिनी श्शशिशिराश्शिशिराः कुरुते रमे ।।

570 त्रिणयनेन विनम्रशिर: क्षरत्त्रिदशासिन्धुमहोर्मिभिरुत्सवे ।
किमपिपाद्यमदायिपद्माब्जयो र्नतवतातव तामरसालये ।।

571 तवमहे मिलितात्त्रिदशीगणान्नबिभिदे नरलोक वधूजन: ।
त्वदवलोकन विस्मयतो यतो जननिमे ननिमेषमवाप स: ।।

572 प्रणयिनास्ममुत्सवमण्टपे स्थितवतीं भवतीं प्रणिनंसव: ।
हरिगिरि हरिपत्नि समाश्रिता स्त्रिदिविनोदिविनोपययुस्स्पृहां ।।

573 अधिमहं भवतीं कमले स्तुवन्नभिमुखस्तिमितेक्षणमग्रत: ।
अपि सुरेष्वसुरेषु नरेषुवा शिरसि को रसिको न दधेऽञ्जलिं ।।

574 अधिमहोत्सवमप्सरसां मणी स्सह रमे पर भक्तिजुषस्त्वयि ।
पुळकिन: कळगद्गद गीतयो मुनिजनानिजनाट्यमदर्शयन् ।।

575 उपगतोत्सव दिव्यगृहाङ्गण: कमलवासिनि संयमिनां गण: ।
निगम सौरभ शोभनया स्तुतिं सहिगिराहिगिरावकरोत्तव ।।

576 मधुकिरो धिपुरन्ध्रि महोत्सवे शुभगुणग्रथिता किल मालिका ।
स्तव मयी स्तबकै स्तवकैर्गिरां नकलिता कलिताडन कांक्षिभि: ।।

577 तव हरेर्दयिते दृढ भक्तित श्चतसृभिश्श्रुतिभिश्चतुराननः ।
अभिनुतिं तनुते स्म महोत्सवेष्व हरहर्हरहर्यभिनन्दिताम् ।।

578 तव महे स्तव कोटि चिकीर्षया दृगधिका रसनाश्चकमेरमे ।
रचयितुं स्तवमेकरसज्ञया कृशतमं शतमन्युरितत्रप: ।।

579 जननि गन्धवहे भवदुत्सवे खगपतिश्श्रुतिसौरभशोभनै: ।
श्रमहरै र्जनितै र्निजपक्षति व्यजनतो जनतोषण मातनोत् ।।

580 तनुभृतां तव देवि महोत्सवे नटनगान नतिस्स्तवनादय: ।
परम भक्ति भरादिह नाभवन् श्रमकरा मकरालयकन्यके ।।

581 पदयुगं तव भक्ति भरादहं प्रथमिकामुप[illegible] सुरस्त्रिया ।
हरि पुरन्ध्रि महेऽङ्गजितस्फुरत्कनकया नकया परिचर्यति ।।

582 दिनकरं तमसामिव राजय: कमलवासिनि कल्मष पंक्तय: ।
अपि विलोकयितुं प्रभवन्ति ते जनमहो नमहोत्सव दर्शिनं ।।

583 तव महे सुर दानव मानव प्रभृति पादहति प्रभवैरमे।
क्षितिरजोनिचयैस्स्थगितातपो दिनकरो नकरोति जनव्यथां॥

584 अथतवास्यविधोरवलोकना त्सुरकराम्बुरुहाणि महोत्सवे।
मुकुळितान्युडुपंक्ति परिस्फुरन्नवरदे वरदे कमलालये॥

585 मुकुळितं नियमेन कराम्बुजे र्मुदित मक्षि चकोरकुलैस्सतां।
तव महेऽम्ब हतौ नयनी भवद्रविविधौ विविधौजसि भात्यपि॥

586 तवसिसेविषयाविषयान्तर त्यजन निश्चल चेतस उत्सवे।
प्रजहुरम्ब तपोपि पराशर प्रभृतयो भृतयोग कलास्स्वयं॥

587 सुमनसो मुनयश्च तवोत्सवे त्रिदिव धेनु पयोरस धारया।
विरचयन्त्यभिषेक विधान मृक्चययजुषां यजुषां प्रकरैरमे॥

588 विधिशिवादि सुरेषु तवोत्सवे विरचयत्स्वभिषेचनमिन्दिरे।
मनुशतं मुनि माणवका स्स्फुट ध्वनि जगुर्निजगुर्वभिचोदिताः॥

589 तवमहेष्वभिषेक विधौ कृते जगदशेष मगादपतापतां।
तदिदमद्भुतमम्ब फलिस्थलात् फलगति र्लगतिस्म परत्रयत्॥

590 अथतवोत्सव धाम्नि बुधास्सु धाकरसहोदरि सादर मार्चयन्।
सुरभिळै र्भवतीं श्रितषट्पदारवकुलै र्वकुळैरपि चम्पकैः॥

591 मधुलिहां भवदङ्घ्रिसमर्पित प्रसव वासवतां कमले तदा।
सुरकिरीट गताज्जगृहे भिदा रवलवैर्वलवैरिशिलाकुलात्॥

592 सुमनसो भवदंघ्रिजुषां रमे सुमनसामनुषङ्गत उत्सवे।
तव पदान्तिक भाजमपूजयन् सुमलिनामलिनामपि मण्डलीं॥

593 स्वशिरसा दधतः कुसुमं मुदा सुमहिता इति नाद्भुतमुत्सवे।
चरणयोस्सुरपंक्तिभिरर्चितं तवनरावनराशितनू भवे॥

594 पनसचूत फलादिभिरुज्वलं सरस सूप मपूप शताकृतं।
अथ निवेदनमम्बसुरैः क्षरद्घृतवरं तवरम्यमकल्पयत॥

595 जननि शेषतया भृशमुत्सुकै स्तव निवेदितशेष मभुज्यत।
सुमधुरं सुमनोभिर थोत्सवापवरके वरकेतन भूषिते॥

596 अथसुधान्य भवं जनमोदनं जननि मानस रञ्जनमोदनं ।
भवदवेक्षण संस्कृतमत्तियो रसनयासनयाचति तां सुधां ।।

597 अधिभवद्भवनाग्रवितर्दिकं जननि जाग्रत एव जयादयः ।
अगणयन्नमरानपि तावके घनमहेनमहेन्द्रपुरस्सरान् ।।

598 जनविमर्द शमोद्यतनिर्दयोद्भटचमूपति वेत्रहतिस्पृशां ।
प्रहृतिरस्ति मदम्ब महे तवार्चनकृतां नकृतान्तकृतां ततः ।।

599 तव महोत्सव वैभव दर्शिनां तनुभृतां विविधैस्स्तवनादिभिः ।
प्रमुदिता भवती कमले सतीरपरिपूः परिपूरयति श्रियः ।।

600 जननि तस्य जनस्य वृथा सुधा सह भवे न्दिधे विधिरीक्षणे ।
यइह नानुभवेदलसस्तवो त्सवरसं वरसंमदकारणम् ।।

601 भवदीयोत्सवविभवं फणिपति वाचस्पतिप्रभृति वर्ण्यं ।
कथमल्पधियः कवयः कथयन्तु क्षीरधेः कन्ये ।।

## 13 वदान्य स्तबकः

602 वाराशि दुहितुस्तस्या वरिवस्यां विदध्महे ।
अनन्यजनसामान्या माहुर्यस्या वदान्यतां ।।

603 द्वित्वं चेद्दधिरसनं विलोचनेषु त्रित्वंवा यदि वदनेषु वा चतुष्ट्वं ।
यद्वास्यादधिभुजमेतदम्ब वक्तुं दातृत्वं तव कवयस्तदा क्षमेरन् ।।

604 यःपिबेज्जलधिमम्ब यस्तरे द्यश्च तत्र नियतं शयीत वा ।
तेन वर्णयितुमर्णवात्मजे शक्यते तव वदान्यता नवा ।।

605 अम्ब त्वमेवाश्रित मृत्युहन्त्री सदातनी सर्वफलप्रदासि ।
स्वयञ्च पञ्चत्वमुपाश्रितेभ्यो देवद्रुमेभ्यो लभतां फलं कः ।।

606 तामत्युदारां कमले भजे त्वां यया सुधाब्धौ सहजन्म मात्रात् ।
एकस्तरुर्लुब्धवतंसकोऽन्यः पशुश्च कश्चित्प्रथितो वदान्यः ।।

607 त्वमम्ब दात्रीति किमत्र चित्रं त्वद्वासदेशेऽपि न लोभवार्ता ।
निदर्शनं तत्र भवन्निवास स्सर्वार्थदायी स वृषाद्रिनाथः ।।

608 औदार्यमास्तां नृहरेर्य एष हिरण्यदानावसरे सरोषः ।
सानन्दमिष्टं सकलं ददत्याः स्तुत्यं वदान्यत्वमिदं भवत्याः ।।

609 देहि देवि दयया निरामया मत्र च श्रियममुत्र च स्वयं ।
सञ्चरेम न यथा मुहुर्वयं याचका इह पिशाचका इव ।।

610 त्वमेव सर्वकाङ्क्षितप्रदा पदाब्जसेविनां
वदान्यता गुणस्तुते वदान्यतः क्व दृश्य
सुधापयोधिकन्यके वृधासमुन्नतिस्पृशा
नदानवारि दारुणोत्तमेन विद्यते फलं

611 श्रीवत्सजुष्टं स्थलमाश्रिता त्वं मनोहरा क्षीरचिताश्रितश्रीः ।
प्रवाळदीधित्यवलम्बिताङ्घ्रिस्सत्यं रमे कामधुगस्युदारा।।

612 ख्यातः कलामात्रद एष चन्द्रो मातश्शिबिश्चेत्पल मात्रदायी ।
विषप्रदो वारिधरः श्रितानां कल्याणि काङ्क्षाधिकदा त्वमेव ।।

613 कल्पद्रुमस्सुमित एव घनोप्प्रदाता
कर्णोप्यपार्थकरुण स्सबलिः कुदाता
नाथस्तवापि कमले स हिरण्यहारी
नातोस्ति ते वितरणे प्रतिवस्तु किञ्चित्

614 आमोदजुष्टं मधुकालयोगा त्फलं ददानं भजतामभीष्टं ।
शाखाशतोदार सुपर्णवाहं देहं रमे कल्पतरुं तवाहुः ।।

615 मुदा वदान्याश्रितमब्धिकन्ये यं किन्नरेशादधिकं करोषि ।
नकिन्नरेशादधिकस्स एष इतीममाहु र्भुवि हन्त सन्तः ।।

616 विविध विभवधात्रीं इन्दिरे विश्व धात्रीं
भगवति पदवीं यस्सेवते देवतेड्यां
अधिकृतिलवमात्रादन्तरिक्षोन्मुखाक्षान्
अयमगणित सर्वानल्पदान्नोपसर्पेत्

617 त्वयि भगवति सत्यां सर्वमिष्टं ददत्यां
कमपि नृपपिशाचं याचते यः कुचेता
फलवति सहकारे भासुरे सत्यदूरे
श्रयति दुरधिरोहं देवि शाकोटकं सः ।

618 प्रपदन जुषान्दृष्ट्वा दृष्टार्पणैक वदान्ययो:
तव चरणयो स्सेवामेवाचराणि हरे: प्रिये ।
सकृदपि पुनस्त्रासी नासीय वित्त विवित्सया
परुषवचसां राज्ञां प्रज्ञावमानकृतां पुर: ।।

619 दृष्टादृष्टदया दयाशिशिरया दत्ताखिलार्थास्त्वया
मातर्वात विधूत वारिद चल श्रीलेशलब्धोन्नते: ।
दर्पोद्रिकविनर्तित भ्रुपरुषं दन्दह्यमानेक्षणं
दस्योरास्य मुपास्य कस्यचिदमी नस्याम हास्या वयं ।।

620 कात्र्स्येण कदर्य वर्य नृपतिप्रीतिप्रतीक्षोदित:
कष्टं कष्ट मपास्त वास्तव चमत्कारो नमेरोचते ।
रामे वेङ्कटनेतुरद्भुत गुणग्रामे दयामेदुरां
त्वामेवाश्रित कामधेनुमसकृत्सा मे स्तुतां भारती ।।

621 भीमान्हन्न भीमा न्राज्ञां न्निचयान् श्रयेय घोराज्ञान् ।
कल्पानोकहकल्पान्दारान् शौरेर्भजे महोदारान् ।।

## 14. यमक स्तबक:

622 यशस्विनीमुपासीय यदुनाथसधर्मिणीं ।
यमकं कथयन्त्यार्या यत्पदं कल्पशाखिन: ।।

623 दयासंपूर्णहृदया मयाकृतमनामया ।
रमा गुणेन परमा स्तवं गृह्णणातु वास्तवं ।।

624 मातस्त्वदंघ्रौ मम देहि भक्तिं मात: परस्मिन् हृदयं प्रसांक्षीत् ।
सा कंसशात्रोर्दयिते शुभेन साकं चरीकर्त्यशुभप्रशान्तिं ।।

625 रमे पदाब्जे तव ते मनोरमे नमेयमुच्चैरितरागतिर्नमि ।
सुरेश्वरो यद्भजनेन भासुरे पदे पुनाराजति दैत्यलोपदे ।।

626 रमारमापत्तिमपास्यतान्मे दयोदयोपेक्षित भक्तमन्तु: ।
मुद्रामुदाराञ्चदिशे त्समृद्धिं नतानतापान् कुरुते यदीक्षा ।।

627 उदारविभवा भवामयहरा हरादिमहिता हिताय कमला ।
सुधौघसदृशादृशा शुभदया दयाळुरधुना धुनातु दुरितं ।।

628 घनाघनाभस्य घनाघनाशिन स्सदा सदाशारसदा स्सदार्द्यधी: ।
हिताहिताक्ष्या रहिता हिता मनो रमेऽरमेवाचर मे रमेमुदं ।।

629 सरोरुहारामगृहां सुमल्लिका सरोरुहारांकमलां मधुद्विष: ।
भुजान्तरामोदकरीं नुम: क्षमाभुजांतरामोनुसृतिंव्यथाम्बुधिं ।।

630 नृपो निरास्थस्सुमनोजनेयो मनो जने योनहितेन मेर्थ: ।
स्थितां प्रणम्यासमुरस्यहन्तु मुरस्यहन्तुस्स्वयमिन्दिरत्वां ।।

631 दृष्टिर्दयैकावनितेऽरमेनश्छिनत्तु विष्णोर्वनिते रमे न: ।
भवं तवास्थेयमपीडनेन कुत:क्षतिर्मे यमपीडनेन ।।

632 कुभूभुजां संप्रति माननेन फलं सुधांशुप्रतिमाननेन ।
शुभं प्रयच्छाविकलं कलेशास्वसस्त्वहं स्यां विकळङ्कलेश: ।।

633 करोतु मोदं कमला समुन्मिष त्कला विलासारसिनी विभावसौ ।
कृपानिधौ वेङ्कटशैल नायके कलाविलासारसिनी विभावसौ ।।

634 योगाय योगायति भावुकेन रामेरामेवहरेस्तवाख्यां ।
नाळीक नाळीक सवित्रिधाम तेनाक्षतेनाक्षयमाप्यते तत् ।।

635 नृणान्दशास्सार्थयितुं तवा भूद्रमेयदेहानरमेयदेहा ।
प्रामात्दा त्वं फणिराजशैलवनाळिकेरां न्नवनाळिकेरां ।।

636 त्वयाश्रितस्यात्र परत्रचोच्चैकरकारिरामेनरकारिरामे ।
गोपालकं त्वं नयसे रसं या गवासमेतं नगवासमेतं ।।

637 शुद्धया त्वदभिधा सहस्रकं योगिराजपतिनासमन्तत: ।
तं विदुर्हरिसखि त्रयीविदो योगिराजपतिना समं तत: ।।

638 दानश्रिया विहसितामरसालये तां पापापहां जननि तामरसालये तां ।
पादद्वयीं सहि भजेद्रुचिरागमां ते यस्यास्ति निर्मलधियो रुचिरागमान्ते ।

639 वशितसर्वजगत्पतिरक्षया दृगशुभं तव लुम्पति रक्षया ।
हृदयमुज्झतु देवि नमामकं त्वदिनमन्यमितो विनमाम कं ।।

640 त्यजति यच्छ भलाभवती नतान् जननि मत्प्रभृतीन् भवतीनतान् ।
मिलतिमिनयथामति रंहसा मम तथादयतामतिरंहसा ॥

641 पद्मेऽस्तु तुभ्यं प्रथमा नमस्या स्थिरं फलं हि प्रथमानमस्याः ।
विधाय मान्यां महतामहंतां हराम्यरीणां महतामहन्तां ॥

642 भवत्यजे यं तनुतेऽजसेव्या जनाय लोकं दययैव तं श्रीः ।
भवत्यजेयं तनुतेजसे व्याध्यघोज्झितं मे कुहृदेऽपि दत्ते ॥

643 निधाय भवती दृशं नवसरोजपत्रायतां
श्रितं हरिपुरन्ध्रिमां हृतनमद्विपत्त्रायतां ।
नमां किल विना त्वया वति तमः कदम्बादयः
कठोरहृदयो हरिः खलजनेऽस्मदम्बादयः ।

644 न समाधव स्तवगुणा नसमायतनेत्र एव कमलायतने ।
क्षमतेभिधातुमतिदक्षमते स्तवनाय कः पटुमतिस्तव ना ॥

645 भवती जगदम्ब कृतार्त भवोपरमा परमा परमा परमा ।
कुहृदोद्रितटीमवनायकृपा महिता महिता महिता महिता ॥

646 रमा रमा रमा रमा थ्युपासितं यमर्णवात् ।
धियो हरि वृषाचलोत्तमेतमेतमेतमे ॥

647 त्रातुमप्रच्युता वारिजातेक्षणा त्वंनतान्ध्वस्तदेवारिजाते क्षणात् ।
पातकादिन्दिरे पाहि मां शोभित श्रीरघ ध्वान्तलोपाहि मांशोऽभितः ॥

648 मन्दारा मन्दारा मन्दारामन्दाराधिघ्नादैत्यारेऽऽ२१.।द्रिं तं प्रामाः ।
सारावा सारावासारावा सारावागालीढा शृङ्गाळिर्यस्यार्तान् सन्त्रातुं ॥

649 शमदमौ मदमौढ्यहरौ वहन् मधुरिपुं धुरिपुण्यकृतां स्थितः ।
विनमतीनमतीवतवार्चको निजगदं जगदम्ब जहाति च ॥

650 जननि त्वया परिचरत्सुरकिन्नर कान्तयान्यजुषास्तुतया ।
हृदि मे विना किमपि कुमनमन्त्रकान्तय नयजुषास्तुतया ॥

651 त्वमेव सेव्यासि दृशैव ते स्थिरं रमेयतो यादव नायके वलं ।
उरो हि शौरे रुदधेस्त्वमग्रही रमेयतोयादवनाय केवलं ॥

652 सारसं श्रितवतीं ससारसंमाननां हिमकरोपमाननां ।
देवतां प्रणमतो मुदेवतां वेदनादमहितां न वेदना ।।

653 सा मयि देयादीक्षां रमार्तरक्षार्थमाददेयादीक्षां ।
यत्पदजलजनतानामपि सुगमं दिव्य धाम जलजन्तानां ।।

654 कमले राजीवानां कुले स्थितात्वं गतिः परा जीवानां ।
जगदाराध्या यंति श्रेयस्त्वां ये कृतादरा ध्यायन्ति ।।

655 किमपि महोदारेषु प्रथमं मधुवैरिणो महोदारेषु ।
जयति सपर्या यस्य स्थिर फल दात्री सुरद्रुपर्यायस्य ।।

656 विधृतां हरिणाङ्केन त्वां प्रतिवददाननां हि हरिणाङ्केन ।
प्रणमन् जननि बिडौजा जनो भुवस्स्यात्स्वबन्धुजननिबिडौजाः ।

657 कलशोदधिकन्या यं पश्यति विद्यात्सतावदधिकन्यायं ।
जितकथकवितानेन त्रयीविदा लभ्यतेचकवितानेन ।।

658 श्रीस्सेवानरकेषु त्वयार्थ्यतां हरिरिताढ्यवानरकेषु ।
मां विनिपात्यनघोराश्शुचोयथा नयति किन्तु पात्य नघोराः ।।

659 सततविकाराकल्पं प्राप्तोहं देहमम्ब काराकल्पं ।
कुभवादाशु भवत्या स्वयमुद्धार्योरमे सदा शुभवत्या ।।

660 सारासाराज्ञानस्थानेन किमस्ततेजसा राज्ञा नः ।
श्रीस्त्वयि मानसमेत न्न्यस्येम विमुक्तयेभिमानसमेतं ।।

6 61 व्यक्तिं विन्देमहि तामिन्द्रादिसुरैर्नवारविन्दे महितां ।
मध्यमतारक वर्णाभिहिता यानखजितोरुतारकवर्णा ।।

662 हतसदरिद्रव्याधिश्रितजनमुच्छिन्नदुर्दरिद्रव्याधिः ।
अतुळकृपायादेवप्रणुतासा मां रमात्र पायादेव ।।

663 शोषित भवनदयाग स्तन्येशः कचजितोत्प्र भवनदयागः ।
सोनभि भव वनदयागःसोदवावति पद्मयात्म भवनदयागः ।।

664 त्वां हि सुधीरा जयति स्तुतां स्तवैर्यः प्रमानि धीराजयति ।
भवती धीराजयति श्रीस्तंभभुवोत्र सोदधीराजयति ।।

6 65 भक्ततमानायतया हृत्तव कमले सुरोत्तमानायतया ।
विश्रुतमानायतया शमय भवं श्रेयसेसमानायतया ।।

666 श्रीः पर भागवती यम्यभिष्टुता मां मुकुन्द भागवतीयं ।
फणिवृषभागवती यंपश्यति भजते पदं सभागवतीयं ॥

667 तृष्या तनयाचार्यारहितेनान्तस्त्वयाब्धि तनयाचार्या ।
त्वं चित्तनयाचार्या प्रभृतीरितरा नमच्छ्रुतनयाचार्या ॥

668 मां हरिरामायतया दृशा पुनात्वेनसां विरामाय तया ।
प्रथिततरामायतया काकेप्यसुरे कृपां परामायतया ॥

669 राशेर्वारामस्य श्रीस्त्वं दुहिता थचोत्सवारामस्य ।
अवनि भवारामस्य प्रियाधियन्नस्सदोष वारामस्य ॥

670 हरिसुरदारुण्ये नास्स्थितिमुषिवल्लीवद भूद्यदारुण्येन ।
भृतवन्दारुण्येनत्वीडे दैवतमसङ्गिदारुण्येन ॥

671 श्रीर्हितकरवाणीयान् पश्यति तेभ्यो नमांसि करवाणीयान् ।
हृतशोकरवाणीयान् हातुमनर्थान् सुमप्रकरवाणीयान् ॥

672 महोदया सारभुजा त्वया तया महोदयासार भुजा त्वया तया ।
विलोपकारातिशयास्तदेविभा विलोपकारातिशयास्तदेवि भा ॥

673 सुरक्षया देवहिता दृशावमा सुर क्षयादेवहिता दृशावमा ।
मुदा रमे धेहि गिराविहानता मुदारमे धेहि गिराविहानता ॥

674 केवलं तुच्छविमता हरिणाक्षि तवामताः ।
केवलं तुच्छविमता हरिणाक्षि तवामताः ॥

675 वैरस्य हानिदानेन मान्या साध्येन साद्यतु ।
वैरस्य हानिदानेन मान्या साध्येन साद्यतु ॥

676 वृषाचले शङ्करतोद्यमान वृषाचलेशं करतोद्यमान ।
वृषाचलेशं करतोद्यमानयांबात्यजोवष्टिदृशो गिरस्ते ॥

677 राजीवायतना परत्र महती कुर्यान्मुदं नः कृपा
राजीवायत नागबाहुरघहृत्कृष्णो नदेवोपरः ।
राजीवायतनाविहापि सुखदा शुद्धा तयैवाप्यते
राजीवायतनायकं फणिगिरे र्यासौ दयास्रोतसां ॥

678 कौमारमारचयतस्सकलं तपोस्य सामारमारकनुतस्य वृषाचलेन्दोः ।
रामारमारहितकोपतया कृतास्मत् क्षेमारमारकिसुधांशुजयत्ववन्यां ॥

679 सारसेन महितापहारिका सारसेन महितापहारिका ।
सारसेन महितापहारिकानन्तगाजयति यानघारमा ॥

680 त्वां गतिं जननि येच्छयैव मीलनयामितरसाम्महोदया ।
मान्यामि तरसामहोदया मानयामितरसाम्महोदया ॥

681 मारमातरणिमानमस्यतां मारमातरणिमानमस्यतां ।
मारमातरणिमानमस्यतां मारमातरणिमानमस्यतां ॥

682 कलितमसारमनाशां ध्यायामहितं नरामरामान्यं ।
कलितमसारमनाशाध्यायमहितं नरामरामान्यं ॥

## 15. नक्षत्र माला स्तबकः

683 आनन्दमैन्दिराः कुर्युरपाङ्गा यत्प्रसङ्गतः ।
अश्विनी हस्तिसम्पन्ना सम्पद्रुज्जृम्भते नृणां ॥

684 भगवति सुधाब्धिकन्ये भवतीं भूष्णुः प्रपद्येऽहं ।
परमाभरणी भूतां भुजान्तरे भोगिशैलेन्दोः ॥

685 निजशिरसि निदधदुच्चैस्सम्पन्मय्यास्तवाम्ब सोदर्यं ।
अपि सकलविभवदायी हावस्त्रीभूतकृत्तिको भिक्षुः ॥

686 तामसह्य भवतापशान्तये स्तौमि तामरस वासिनीमहं ।
वर्णयन्ति यदपाङ्गमालिकां वासुदेवनिलयाधिरोहिणीं ॥

687 तवसुधांशुजयाभिमुखं मुखं मृगशिरोमणिदर्पमुषौ दृशौ ।
विघटकञ्च वपुस्तटिदुन्नते भुवनमातरतो नतवोपमा ॥

688 करुणालयेन्द्रतनये करुणार्द्रास्तवलोकमातरवलोकविशेषाः ।
परितन्दमान्दुरितं सततं माम धुनापुनन्तु मधुनाशनकान्ते ॥

689 शापेन रोषणमुने श्शमित प्रभावः
देवोत्तमो मधुजितो दयिते विषण्णः
तन्वंस्तव स्तव वचःस्तवकैस्सपर्यां
स्थाने विराजति पुनर्वसुरुद्रसेव्ये ।

690 निगम कथित मायुर्निस्तुलारोग्य भाग्यं
निरवधिक विभूतिं नित्यहृद्याञ्च विद्यां ।
भगवति गुणपूर्तिं भास्समानाञ्चकीर्तिं
बलिरिपुपद भक्तिं भेजुषां पुष्यसि त्वं ।।

691 शेषाचला धीशांगकाश्लेषाचलामोदोन्नतिः
सैषाभवोन्मेषाब्धिसंशोषावहा विश्वप्रसूः ।
तोषायनः कल्पेत दुर्दोषापहा यस्याः पदं
भाषाशची मुख्य द्युसद्योषाशिरो भूषायते ।।

692 इहोपास्ते यस्ते चरणकमलद्वन्द्वममलं
सपूज्यः स्वाराज्यं जननि कलयिष्यन्नविकलं ।
मघोनस्साम्राज्यं मदनमथनस्यापि विभवं
तृणप्रायं प्रायो गणयति पदं द्रौहिणमपि ।।

693 आर्यसेवित मक्षयं फलमिष्टमार्यमतारकं
यत्क्षणेन निजेक्षणेन मुदा ददाति सदातनं ।
तत्तटित्सम धाम मङ्गळ नाम तामरसालयं
पालयत्विममानमत्सुरयौवतं परदैवतं ।।

694 एकेनाञ्जलिनैव कञ्जनिलये सर्वार्थमुर्वीतले
सन्दायाथ मुकुन्दमन्दिरगतिं सन्तन्वतीं त्वां विना ।
मारंस्तातिचलेखले नृपकुले वागुत्तराफल्गुनी-
त्याशासेऽहमहर्निशं तदितरद्याचामि नो जातु चित् ।।

695 क्षिपतुक्षिप्रमनल्प मप्रतिहतस्तापत्रयं मामकं
भवदावाग्नि भयावहस्त्वकृपा वीक्षासुधानिर्झरः ।
व्यधयन् साधुकदम्बमम्ब विहितप्रौढागमव्याहतिः
शशिनस्सोदरिहानिदाघ विभवश्शान्तिं यतो विन्दति ।।

696 लोके पाकारिमेके विरचितयजन श्रेणयः प्रीणयन्ते
केचित्त्रासापनुत्यै विदधतिनृहरे योगिवर्याद्य्वर्यां ।

अन्ये पाथोधिकन्ये हरपरिचरणं कुर्वते सर्वदेह
त्वामेवामेयरूपां मनसि वयममी सेवया भावयाम: ।।

697 मयि सर्वापकृतिक्षमेपि कलयस्वातीव शीतान्दयां
हरिकान्ते भुवनोपकारनिरतेष्वन्येषु धन्येष्विव ।
पनसाम्रादिमहीरुहेषु ददती भूरीणि वारीणि सा
विषवृक्षेपि मुहु: प्रवर्षति न किं विश्वाम्ब कादम्बिनी ।।

698 पूर्णं वर्णयितुं तवाम्ब निगमा नप्राभवन्प्राभवं
यस्या: स्वर्गणिका मुदं विदधते दास्येन लास्येन च ।
वाणी सा च विशाखदन्ति मुखयोर्मातापि जातादरे
धन्ये चामरवीजनं रचयते धत्ते कळाचीं शची ।।

699 बहुतरमनूरा धारयता मुखैरखिलश्रुती:
नळिनजनुषा निर्मातुमहो यदम्ब न शक्यते ।
कथमिह तव स्तोत्रे कवय: स्वयं वयमिन्दिरे
जगति शिशवोऽशक्यार्थकृतोऽथवा जननीमुदे ।।

700 त्रस्यत्ताताभिहितवचन त्राणधर्मायसीते
ज्येष्ठेकार्हे रघुपरिबृढे राज्यमुत्सृज्यया
विश्वं त्रातुं त्वमनुचलिता वीरमेनं हि नो चेत्
कस्माद्भस्मी भवतु जगतां कण्टक: पंक्तिकण्ठ:

701 द्विषचमूलयेच्छया तवांघ्रिपद्ममिन्दिरे
स्फुरत्सरोजमन्दिरे सुरा: पुरा ववन्दिरे
तदेवसम्पदेवयं निरापदे तमोभिदे
भजामहे भुजायुगी युजानतेन मौळिना

702 कलितनियमपूर्वाषाढकाषायचेला
यतसकलहृषीका यद्यतीन्द्राविशन्ति
तदपि भजति धाम न्यस्य भारं त्वदंघ्रौ
मम जननि नृपाशो मादृशो बालिशोऽपि

703 सारापदानशतमोदित विश्वदेव तारापतिस्थमपि भानुसुतेन राज्यं ।
त्वत्प्रामिकार्य सहकारगिरैवलब्धं कार्योद्यमोपि महतां कमले शिवाय ।।

704 दुरितं विषह्य निखिलन्दयानिधे परिपात्वकिञ्चनममुं भवानिति ।
जगदुद्रवादिनिरतस्य शार्ङ्गिणः श्रवणेऽभिधेहि रहसि स्वयं रमे ।।

705 अशक्तोऽस्मि दुस्साधनिष्ठा सहस्रेष्वहं कर्मबोध ध्युपायान्तरेषु ।
उ तस्तावकीने सुरद्रोरनूने पदे लोकमातः प्रपद्येऽतिभीतः ।।

706 त्वत्परिग्रहजुषं द्विषन्नमे क्षीयते बहुसहायवानपि ।
तन्निदर्शनमपास्त वारिजश्चन्द्रमा श्शतभिषङ्निषेवितः ।।

707 भगवति यस्य [illegible]नकंप्रोष्ठपदमास्यं ।
भवति हि जगति गतिस्तच्चरणाम्बुजरेणुरस्माकं ।।

708 त्वत्पदमरविन्दगृहे वन्दन्ते हन्त जन्तवो भुवि ये ।
भुवनोत्तर भाद्रपद क्षुण्णममीषां गृहद्वारं ।।

709 शिशिरवतीर्यसिन्धौ साकं शीतांशुना पद्मे ।
करुणार्द्रे कान्तहृदि स्थास्नुर्मुष्णासि तापम्मे ।।

710 संग्रथ्यचित्रैः पदरत्नषण्डै स्समर्पिता दास्यजुषा मयैषा ।
नक्षत्रमाला [illegible] जकन्ये हृद्यात्वदीये हृदये चकास्तु ।।

## 16. चित्रचरित्रस्तबकः

711 पवित्रं पद्मना भस्य कळत्रं तत्पुनातु नः ।
विचित्रं त्रिषु लोकेषु चरित्रं यस्य गीयते ।।

712 अप्राकृतेपि भगवानवताररूपे प्रायः प्रजानुगुणमेव करोति जन्म ।
[illegible]तस्त्वया विमथिते प्रथमे हि भूते चित्रं पुराजनिरकारि तथा द्वितीये ।।

713 ख्यातो भुवि ज्वलन शीतळिमानुमानं
बाधानुविद्धमिति तार्किकसम्प्रदायः ।
वालानले कमलवासिनि वायुसूनोः
चित्रं चकर्थ कृपया शिशिरत्वमेव ।।

714 निमग्नमग्नौ किल वस्तु भूयो ह्युन्मज्जतीति क्वनुदेवि दृष्टं ।
वपुर्विचित्रं तव वह्निमग्नं उन्मज्जनं मज्जननि प्रपेदे ।।

715 स्वबाधकान् साधुजनोऽपि शक्तौ बाधेत पाथोधिसुते जगत्यां ।
बाधाविधात्री भवती ररक्ष रक्षःस्त्रियः प्रत्युत वायुपुत्रात् ।।

716 शोकादपेतस्स तवावलोकात्पाकारिपाकः किल काक एकः ।
लोकाननेकान् लभते स्मचित्रं नाकाधिपार्थ्यानपि वृद्धगृध्रः ।।

717 प्रायः स्त्रियः पत्युरतिप्रियाश्चेत्पद्मे सदा पार्श्वमुपाश्रयन्ते ।
निरन्तरन्त्वन्तु निधीयसेऽहो भुजान्तरे भोगिनगेश्वरेण ।।

718 कान्तः प्रियां वहति कामवशाद्दृशीति
वाङ्मात्रमेव भुवि शुश्रुम वार्धिक
आश्चर्य मब्जनयनो हरिरब्जगात्वं
युक्तं ततो दृशि बिभर्ति तव प्रियस्त्वां

719 सर्वे किञ्चित्कुर्वतः स्वानुकूलान् संरक्षन्तः प्रेक्षिताः सिन्धुकन्ये ।
अज्ञल्यज्ञानार्जितागः प्रपञ्चा नस्माद्दक्षानप्यहो रक्षसि त्वं ।।

720 दृष्ट्वा वेणुं जडमपि जना देवि वाचालयन्तः
कृष्णोप्येनं मुखरयति चेत्किंम्पुनस्तत्रचि
श्लोकान्मूकानपिच भवती वादयत्यप्रयत्नात्
चित्रं शौरेस्सखि वयममी तत्र दृष्टान्तभूताः

721 मादृक्षरक्षणकृते मकराङ्कमात
र्बाहान्तरे करुणया भवती निविष्ट
अर्चात्मना ध्रुवमवास्थितमञ्जनाद्रौ
विश्वंभरं विभवकार्यकरं करोति

722 विश्वप्रसूरपि त्वं विचित्रमुरगेन्द्रशैलपति कान्ते ।
मन्मात्रासाधारणमातेव विशिष्य पुष्यसि रमे मां ।।

## 17. नाम वैभवस्तबक:

723 धाम्ना दृश्येय राजीव धाम्ना तेन दयालुना ।
आम्नानं जातुचिद्यस्य नाम्नां ज्ञानै र्युनक्तिन: ।।

724 अणविन्द्रतनयेऽतिदुस्सहै दुर्नरेन्द्र गुणवर्णनातपै: ।
आर्तया रशनयाद्य शीतलं कीर्तयामि तव नाम कोमलं ।।

725 राजीवगेहे तव मर्त्यराजीराजीवयन्ति व्यसनाब्धिमग्न: ।
नामानि य: कीर्तयते स धन्यो वैमानिकानामपि माननीय: ।।

726 पञ्चेषु चापल पलायन सिद्धमन्त्रं
[illegible]दं कुहनापिशाच्या: ।
कोपानल प्रशम सान्त्ववचो मुरारे:
केनाम नाम न जपन्ति तवाब्धिकन्ये ।।

727 आम्नायदुग्धजलधेरमृतम्मदम्ब
नित्यद्विषां प्रहरणे द्रुहिणास्त्रमन्त्र: ।
नारायणस्यकिलनित्यजपस्त्वदीयं
नाम प्रगल्भतममभ्युदयन्तनो[illegible] ।।

728 साम्नां जन्मान्तरमखिल [illegible]सर्गान्तरं वा
पर्यायो वा सकल[illegible]षां प्रक्रियाथर्वणानां ।
वेदान्तानां किमु विनिमयो विश्रुतं विश्वमात:
दिव्यं भव्यन्दिशति जगतां देविनाम त्वदीयं ।।

729 नामरक्षणपरस्तवोचितं नामरक्षणमपेक्षते रमे ।
यस्तनोति तव नामयोजनं सोयमद्भुतमनामयोजन: ।।

730 त्र्यन्तकप्रणयि मनस स्तापसा: पापसार्थ
प्रत्यादेश प्रमुदित महाचेतस: स्फीतसत्वा: ।
नामश्रीमत्तवकिल वलत्कीर्तय: कीर्तयन्त:
मातर्मुक्तौ विहितकुतुका मोदयन्ते प्रियन्ते ।।

731 भास्वद्वर्णं वृषगिरिपते र्भावुकं तन्वताते

धाम्ना धाम स्फुरति जलधे: पुत्रि नाम्ना च नाम

रम्यं हर्म्यस्थलमपि मही रक्षिणश्शैलतुङ्ग

दीपारोपं रजनिषु विना देवि देदीप्यते किं?

732 अप्यस्माकं वचनमचमत्कारिकंसारिकान्ते

प्राज्ञास्वाद्यं भवति भवतीनामधेयानुषङ्गात

कर्पूरादि स्थिर परिमळ द्रव्यसाचिव्य भूम्ना

निर्गन्धेस्यादपि सुरभिता निम्बकाष्ठस्य चूर्णे

733 अम्बा लक्ष्मी रमृत सहभू रब्धिराजन्यकन्या

पद्मा विश्वम्भर सहचरी पद्मसद्मा रमेति

यो नामैवं पिबति भवती नामनामामृतौघं

तस्येवाहुर्जननि सुलभां संसृतिश्रान्ति शान्तिं

734 न मुहु र्बहु मन्महे मनू न्नचवाचो जरतीरधीमहे।

प्रयता: प्रयतामहे वयं तव नाम्नां हरिपत्नि कीर्तने॥

735 अनिरास्य मधोक्षजप्रिये भवरोगं बहुलङ्घनैरपि।

तरितुं प्रभवन्ति लीलया तव नामौषधसेविनो जना:॥

736 नहिनन्तुमनन्तमीश्महे नचनिर्माणकथापि कर्मणां।

कमले कलिभीनिवर्तनं कलयामस्तव नाम कीर्तनं॥

737 विविधानि तवाधुनातु नाम व्यसनान्याब्धिसुते धुनातुनाम।

अपि यज्ञपत: कलावहानि स्युरमून्युज्वल धीकलावहानि॥

738 राष्ट्रप्रसङ्ग कुजनस्तुतिराजकार्य दुस्तर्कवाद परदूषणदोषशान्त्यै।

नारायणप्रियतमे ननु पावनानि नामानिकीर्तयतु ते रसना मदीया॥

739 प्रादेशसम्मितनिजोदर पूरणार्थे रत्यर्थमेभिरनृतैरभिदह्यमाना।

निर्वातु नीरधिसुते रसना त्वदीयै राख्याशतैरभिमतैरमृतैरिवासौ॥

740 अगतिकदेहिदेहि वचनश्रुतिदु:खदशा

कुपितमितम्पचस्तवन दुष्कृति निष्कृतय:

भवदभिधा सुधा भवदवानल तापमुष:

जननि पुन: पुन: परिपुनन्ति जगन्ति रमे ।।

741 श्रुतिफणिति स्थितिस्मृति पुराणतति श्रवणे

भगवति मादृशां जगति न प्रतिभाति गति: ।

तदपि तव त्वदीय दयितस्य च नामजप:

जयति कलौयुगे जडधियामपि कामदुघ: ।।

742 मनसिज [illegible] परितुष्टिकरं

जननि समानमेव ननु साम च नाम च ते ।

अतिशयमादिमादपरमेव तथाप्ययते

निधनमुपद्रवञ्च न कदापि यतस्सहते ।।

743 पापाटोप निदाघ वर्जन दशा पर्जन्य गर्जायिते

व्याधिव्याळकुले पतत्पति गरुद्वातूल नादायते ।

दारिद्र्य द्विरदेन्द्र दारणविधौ सिंहाट्टहासायते

पद्मेतावक नाम संसृतिनिशाप्र[illegible]ष वाद्यायते ।।

744 [illegible] लक्ष्मीरिति

श्रीसिन्धोर्दुहितेति कैटभरिपोर्दाराइति श्रीरिति ।

श्रेयस्साधनदेवतेति जगतां मातेति सीतेति च

प्रातर्मातरुपास्महे कृतशुभस्थेमानि नामानिते ।।

745 अञ्चत्पञ्चपवर्णमर्पय[illegible]ते त्वन्नामकर्णा[illegible]तं

मत्पापानि महत्तराण्यपि मुहुर्मुष्णाति कृष्णाङ्गने ।

अक्षीणि प्रतिरुन्धदन्धतमसं गेहेषु भूयिष्ठमपि

[illegible]ष्ठप्रमितैव दीपकलिका हाहन्त नोहन्ति किं? ।।

746 अ[illegible]धिकन्यके चिकित्स्यान्मरणजरादिमयान्म [illegible]मयान्मां ।

परमविषममान्तरंकषायं पचति शुचिर्भवदीय नामवर्ग: ।।

747 कृतशुभतति धारितं कृतार्थे भगवति भोग्यमतीव पावनञ्च ।

अभिदधति सुवर्णमात्मवन्त: प्रशमित दुर्गति नाम तावकीनं ।।

748 हरिसखि तवधूत क्लेश भूमानि नामानि

अहरहरहमुद्यद्भक्ति राकर्ण्य

जहिदळय बधानच्छिन्धिभिन्धीति कष्टं

यमभटरटितं तद्भूरि दूरीक्रियास्

749 स्वपदन्यसनेन चारुवर्णा सुरवागोष्ठविशुद्धिहेतुभूता ।
कमले मम कांक्षितानि दुग्धे स्तवनार्हा तव नाम कामधेनुः ।।

750 तवदिव्यनाम्नि मधुरे निराकृत व्यसने स्थितेपि रसनेन्द्रियं मम ।
रमतेरमे कथमहो रसान्तरेषु अथवा तदस्य घटते जडात्मनः ।।

751 त्वन्नामदिव्यकुसुमानि दृढैर्गुणैस्ते संग्रथ्य सौरभ विशेष परिष्कृता
आमुञ्चतामिह मदीयसरस्वतीयं मातर्महापुरुष मानस रञ्जनाय ।।

752 मन्वन्तराण्यम्ब फलन्तनीयस्तन्वन्ति मन्वन्तरमात्रवर्ति ।
आमुष्मिकं शाश्वतमैहिकं वा त्वन्नाम किन्नाम फलं नदत्ते ।।

753 वर्णत्रयात्मा प्रणवस्स्वनिष्ठां वर्णत्रयीमेव पुनातिनित्यं ।
एकद्विवर्णापि रमे तवाख्या चित्रं पुनीते चतुरोपि वर्णान् ।।

754 व्याजादुपात्तमपि वारिधिराजकन्ये त्वन्नामकामपि ददाति मुदां समृद्धिं
आपीतमुद्धणतपातपतापशान्त्यै दूरीकरोति दुरितान्यपि वारि गाङ्गं

755 यो वक्ति देवि पदमेकमपि त्वदीयं सर्वाणि तस्यहृदि भान्ति सदापदानि
नित्योन्नतो नृपतिरिव वशीकृतश्चेत् किङ्कर्वति पुरजना इति प्रयत्नः ।।

756 कृपानिधे यम्यधिपाभिधेयं वचोविधेयं तव नामधेयं ।
पद्मालये यस्यगुणोदधेयं पचेळिमं विन्दति भागधेयं ।।

757 त्वन्नाथनाम्नः स्वयमुत्तरं सत्तवाभिधानं गुणमादधाति ।
पद्मेक्षणप्रेयसि निर्विगानं प्रमाणमत्रप्रणवं फणामः ।।

758 पद्मे नाम्नां पामरा स्तावकानां प्रौढिं विद्युर्नैव नामान्तरेभ्यः ।
चक्रीवन्तश्चारु कर्पूरचूर्णे भस्मभ्यः किं विस्मयं प्राप्नुवन्ति ।।

759 जहदिह जननि त्वन्नामधेयं विधेयं

जडमतिरतिरिक्तं शर्मणे कर्मकुर्यात्

निधिमनवधिमुच्चैर्निष्कुटस्थं विहाय

प्रतिभवनमशङ्कः पर्यटेद्भिक्षितुंकः ।

760 दयोदधे या तव नाम धेया भिधासुधेयं यदि तां धयेयं ।

नवाजपेयं कमले यजेयं न वा जपेयं महतोपि मन्त्रान् ।।

761 शरण वरण मन्त्रे शार्ङ्गिणः प्राणकान्ते

परमपुरुषनाम्नः प्रगुपादीयमानं ।

विशदमहिम नामक्षिप्र मेकाक्षरन्ते

वितरति जपतामप्येक मेवाक्षरन्तत् ।।

762 कण्ठेकुण्ठित निस्वने कफचयैरक्षेषु विक्षेपिषु

स्यूतेचेतसि यातनाभिरसुषुक्षिप्रं प्रतिष्ठासुषु ।

सायासापि समुद्र पुत्रि समयाभिज्ञारसज्ञामम

त्वन्नामोपहितं हितं जपतु तद्देवस्य नाम स्वयं ।।

763 अभ्यासैः पवमान मन्त्रविततेरब्लिङ्ग भंग्यन्तरैः

आदेशैरघमर्षणस्य यमकैरष्टाक्षरस्येन्दिरे ।

गायत्र्याः पुनरुक्तिभिः परिप[illegible]योः

शुद्धिं व्याहृतिसोदरैर्न भजते को नाम ने नामभिः ।।

764 प्रायश्चित्तविशुद्ध्यै प्रायश्चित्तं समस्त पापानां ।

गायतु तव नामैषा कमले कलितान्य निरसनारसना ।।

## 18. धाम वैभव स्तबकः

765 अरविन्दवनं वन्दे तदहं यदहर्निशं ।

प्रीतिपूर्वक मध्यास्ते पीताम्बर कुटुम्बिनी ।।

766 सारसात्मनि तवाम्ब मन्दिरे द्वारपालक जनाइवेन्दिरे ।

चारुकेसर सुवर्ण यष्टिका धारिणः परिवसन्ति षट्पदाः ।।

767 तावकं पदमभिख्यया रमे वारिजं प्रणिगदन्ति सूरयः ।

प्रौढशोभनखरांशु वैभव प्राप्तमश्रिमसदाळिसेवितं ।।

768 प्रबिभ्रति भवत्पदप्रणय तद्विपर्यासयोः

जनाविभवदुर्गती जननि तत्र चोदाहृतिः ।

सहस्रवसुरेधते सरसिजानुकूलो रविः

सभिक्षुकशिरोमणिः श्रयति तत्प्रतीपः क्षयम् ।।

769 कपटकिटिदशायां कैटभारिः क्षमाभाक्

प्रभुरकृतयतोऽसौ पङ्कजाते निवासं ।

तदिह भजसि भर्तुर्धर्ममिवानुसर्तुं

परमपुरुषकान्ते पङ्कजातस्थितिं किम् ।।

770 स्थानं समस्तवसुवृद्धिपुषस्तवापि पद्मं रमे नवसुमत्वमुपैति चित्रम् ।

अप्यन्यदद्भुतममुष्यतु योऽनुकूलः शश्वद्बिभर्ति वसुमत्वमसौ पतङ्गः ।

771 सन्म[illegible]नदस्सदसद्विवेके शक्तस्सरोजनिलये सदनं त्वदीयं ।

शब्दैश्शुभैश्श्रुतिपथं सुखयन्गभीरै स्संसेवते जननि हंसगणोऽवदातः

772 कमले कमलेषु सन्निधत्से सकलेषु स्ववशेषु विष्टपेषु ।

सहजं जननीजनस्य लोके जलजातेषु विशेषवत्सलत्वम् ।।

773 कल्हारोत्पलकैरवादिषु तथा कल्याणि मल्ल्यादिषु

प्रायस्सत्सु समेषु वस्तुषु परं पद्मानिसद्मानि ते ।

भाग्यं कुत्रचिदेव नृत्यति तरां भूयस्सु तुल्येष्वपि

त्वत्कान्ताय सुगन्धि वस्तुषु तुळस्येकैव सारोचते ।।

774 त्वद्गेहं कमलं यतस्त्वदविनाभूतस्य विष्णोः पदं

सूर्यालोक विकासमञ्चतिततः पद्मे मधुस्वादु तत् ।

अन्नादोऽहमितीव गीतिनिनदैः श्रुत्यन्तसञ्चारिभिः

कृष्णाकारजुषोऽत्र केचिदनिशं नन्दन्ति लब्ध्वा रसम् ।।

775 सूर्यालोकदशासु हर्षमयते दोषाकरालोकने

सङ्कोचं भजति श्रिताळिषु रमे धत्ते परं जीवनं ।

स्थानं पङ्कमधः करोति वहते नाळीकशब्दञ्चते

कां वा तावकसन्निधानमहिमा कुर्यान्नचर्यां शुभां ।।

776 धत्ते सदैव शिरसा तव पादरेणून्
पद्मे बिभर्ति तव नाम च पद्ममेतत्।
वर्वर्ति धारकतया तव हस्तमेव
तद्युक्तमृच्छति तवोज्वलदास्यलक्ष्मीम् ।।

777 प्रात: कृताप्लवविधि: पयसान्निधाने ब्रध्नार्चकश्शुचिकरो भृततमचक्र: ।
उद्‌घाटयत्युदित विष्णुपदैकसक्ति: विश्वाम्ब पद्ममयसद्मदळाररन्ते ।।

778 ब्रह्मायस्मादजनि वहते चारुपीतांशुकं यत्
सान्द्रामोदं सततममृतस्थानमेवाश्रितञ्च ।
अर्हत्यब्जन्तवपदमिदं श्रीनिवासाभिधानं
मातर्दोषो न भवति मधुस्निग्धताधर्म भूम्नि ।।

779 अहो मुकुन्दसुन्दरि त्वदीयमन्दिराहित:
स्वयं क्षयं व्रजन्नयं स्वरक्षिणं क्षिणोत्यपि ।
सरोरुहद्रुहश्शिवश्शिराधिरोहदुष्कृतात्
विदिक्षु दिक्षुभिक्षुक: स्फुटन्नटन्नटाट्यते ।।

780 त्वद्धाम्नस्सरसीरुहस्य च मिथस्त्वत्कान्त धामात्मनो:
मार्ताण्डस्य च पुण्डरीकनिलयेमैत्रीनिसर्गोदिता ।
कल्याणीं युवयोरियंविवृणुते कैमुत्यनीत्यामिथ:
प्रीतिं कामपि भूयसीमविदिताक्षेपामनौपाधिकीं ।।

781 कति न कुसुमम्मन्यान्यन्यानि देवि वनेवने
न हि समुचितेष्वप्येतेषु क्षमा कमलोपमा ।
भगवति भवत्सान्निध्येन प्रभो: कमलानि यत्
करचरणहक्कल्पानीतिस्थिरन्दधते यश: ।।

782 हरे: करस्पर्शनत: प्रहृष्टा पयस्युदीता रुचिराळिकान्ता ।
वाराशिकन्ये वसतिस्त्वदीया बिभर्ति युक्तं कमलाभिधानम् ।।

783 भृङ्गीसङ्गीत्युदयसुभगं मञ्जु किञ्जल्क पुञ्ज
स्फारस्तम्भं किमपि विकसत्पत्रसच्चित्रभित्ति ।

पर्याश्लिष्टं विमलसरसा कर्णिका स्वर्णपीठं

पद्मं विद्म: परमनुगुणं सद्म पद्मे भवत्या:

784 दुग्धाम्बुराशिदुहितस्तवसन्निधानात्

स्वर्णस्थिति र्भवति हन्त कुशेशयस्य

तत्सम्भवोप्यभवदम्ब हिरण्यगर्भ:

धन्या: खलु त्वदनुबन्ध्यनुबन्धिनोपि

785 नवसारस वासमाचरन्त्यास्तव साधर्म्यमिवाम्ब लब्धुकाम: ।

पुरुष:परमस्सदा विधत्ते पुरमध्यस्थित पुण्डरीकवासम् ।।

786 अस्ति ते हरिपुरन्ध्रि नीरजस्थानमित्युदित मास्पद द्वयम् ।

एकमाहुरिहतुत्रिपात्पदं देवि षट्पद पदं परं पुन: ।।

787 सुरादिजीवैरमृतैकनिष्ठै श्चिरायथैरम्ब विभाव्यसेन्त: ।

आलोकमग्र्यं हरिरेषु तन्वन्नामोदमन्यादृशमादधाति ।।

788 अदोदधानं कमलाभिधानं अम्भश्च तज्जञ्च समं तवास्तां ।

आद्यस्य पुंस: पदमाहुराद्यं त्वदीयवासं जननि द्वितीयं ।।

789 क्षमास्वर्णस्फूर्तिं सततमधिगम्यापि कमले

गुणादार्द्याच्छब्दं कमपि भजते नालमिति यत्

तदेवालङ्कारं नयति नळिनं स्पर्शनवशात्

तनोति ह्यौदार्यं तव जननि सान्निध्यमहिमा ।।

790 भगवति परब्रह्माद्वैत प्रसङ्गजुषस्तव

प्रथयति लसद्धर्माळीकत्वमत्रहिदर्शनं ।

त्वमुचितमधिष्ठानं नाळीकमाश्रयसे तत:

तव किल सदालोकस्सर्वोपिकल्पनगोरमे ।।

791 यत्रोत्तमस्फुरणयन्त्रितचित्तवृत्तौ

नित्योल्लसद्रजसि राजति सारसत्वं ।

स्थानं प्रधानमिदमब्धिसुते यतस्ते

स्थाने तदत्र रमते महदादितत्वं ।।

792 सिंहासनस्थिति जुषस्तव वासयोग्यं

नित्यं भवेयमिति निश्चयमेत्य नूनं।

केसर्य भूत्सरसिजं नरसिहंकान्ते

तद्वेषमेष तनुते तत एव पद्मे ।।

793 अब्जं विधौ द्विषति देव्यमृतैकवृत्ति

कामेन हन्त यदनीयत मार्गणत्वं।

तस्यस्वतोम्बरमणिस्फुटवस्ववाप्ति:

उल्लासहेतुरभवत्तव सन्निधानात् ।।

794 उत्फुल्लवारिरुहतल्लज केळिगेहे

सर्वेश्वरस्य दयितां शयितां ननु त्वां।

वैताळिकाइवगृहीतसुजातगीता:

प्रातश्शनैर्मधुकरा: प्रतिबोधयन्ति ।।

795 सहंसकासारबहूर्मिकोज्वला पयोजराजि: प्रतिपन्नकर्णिका।

सहस्रवस्वामित एधते रमे श्रियश्श्रयन्ते ह्यखिलास्तवाश्रयं ।।

796 सते निवास श्शयनीकृतोवा नाथेन नित्यं नयनीकृतो वा।

फणैस्सहस्रेण वृतोदळैर्वा शेते बिले वा कमले कुशेवा ।।

797 श्रीसूक्तन्ते जननि नळिनं स्थानमाख्याति मुख्यं

दृष्टान्तन्त्वत्प्रियतमदृशोरन्तरादित्य विद्या।

जन्मस्थानन्तवतनुभुवो धातुराथर्वणादि:

त्वत्सान्निध्यात्क्वचन भवति श्रीरनिम्ना महिम्ना।

798 शैवालकान्तरगतं तव सद्मविद्म:

सारङ्ग लाञ्छित वपु र्मिळितामृतौघं।

पूषाप्ति दत्तरुचि पुंसि नपुंसकेच

ख्यातस्य मातरिदमब्जपदस्य वाच्यं ।।

799 कान्त: पदत्रयमितस्थलयाचकस्ते

त्वन्त्वम्ब षट्पदमिते निलये निविष्टा।

स्थानान्यथापि विपुलानि समाश्रितानां

चित्रं युवां कलयतश्चिरमुच्छ्रितानि।

800 त्वत्पादपङ्कजरजः कण धन्य धन्येषु

अम्भोरुहेषु वसतामळिपोतकानां

वर्गेषु हन्त जननं वलशासनाद्याः

वाञ्छन्ति किं पुनरमी वयमब्धिकन्ये।

801 सरोगमुपसेवितेप्यहहपूर्णचन्द्रोदये

ज्वरोपहतमम्बुजं तव परिग्रहादिन्दिरे

विकासयति विज्वरं विरचयन्नसौ भास्करः

रवेररुजमाप्नुयादिति न पूर्वभाषा मृषा।

802 कल्याण धर्मा कमलासनाया मूर्तिं हि यस्ते मतिमानुपास्ते।

कन्ये सुधाब्धेः कमलासनत्वं तस्योचितं तत्क्रतुनीति भूम्ना॥

803 विच्छिन्नमब्दशतक व्यवधानतो यत्

सन्दर्शनं सहभुवश्शशिनः कदाचित्

तत्पद्मवासिनि तदीक्षण वर्जनाय

तस्योदयेषु निजसद्म किमावृणोषि।

804 वारिजवनस्य भाग्यं वर्णयितुं नैव वयममी शक्ताः।

कमले तवस्थितौ यद्विकलिपतं वक्षसासमं विष्णोः॥

## 19. अभयप्रदानस्तबकः

805 अभयं भयमित्येतदुभयं सर्वदेहिनां।

यत्सेवातदभावाभ्यां तामहं श्रियमाश्रये॥

806 भजामि तां त्वां भवरोग भीतिं पयोधिकन्ये परिहर्तुकामः।

वह्नेर्भयं वायुभुवो यथैव न्यवारि तस्माच्चनिशाचरीणाम्॥

807 प्रह्लादस्य भयं विनेतुमचिरादेकस्य शोकस्पृशः

लोकस्यैव भयङ्करन्तवपतिर्जग्राह सैंहं वपुः।

त्रैलोक्याम्ब तदीय कोपदहन ज्वालास्तुवेलातिगाः
चाटूक्तैरमृतै र्निवार्य भवती चक्रे जगन्निर्भयम्।।

808 अशरण जनक्लेशालोक क्षणोपनतोद्गतेः
सतव हृदयग्लाने र्भीतो जगत्पतिरिन्दिरे।
अहह विहितं क्षाम्यन्नागस्सहस्रमजस्रमपि
उभयमुभयो रार्तेभ्यो नः प्रयच्छति लोकयोः।।

809 मुक्तस्त्वया मुह्यति साध्वसङ्गतः सर्वाम्बयुक्तं खलु साध्वसं गतः।
यस्त्वामुपासीत भयातिचञ्चलां चित्रं सधन्यो न भयातिचञ्चलः।।

810 वन्देत मन्देतर नित्य बोधानन्दे मुकुन्देष्ट पुरन्ध्रियस्त्वां।
अत्रासमत्रासनमेति सैंहं चित्राममुत्रापिसयाति ऋद्धिं।।

811 कारागारादपि किल भृशन्तापदे पापदेहे
हन्ताहन्तामतिमति विपन्मिश्रितामाश्रितानाम्।
पारावाराधिपतितनये मादृशामीदृशानां
हित्वाहित्वा त्रिजगति गति र्नेतरा कातराणाम्।।

812 भावी यस्मिन्भगवति भवद्दृष्टिलेशः कृतार्थे
त्रासो न्यासोपहत विपदस्तस्य नस्यात्कुतोपि।
आस्मिन्नर्थे जननि सुरसासिंहिकादेरभीतः
लङ्कायामप्यविहतगती रामदासः प्रमाणम्।।

813 जनिमृतिजरा भीष्मात् ग्रीष्मातपोग्रतराद्भवात्
जननि नवयं वित्रस्यामस्त्वदंघ्रिमुपाश्रिताः।
सतिबलवदालम्बे स्याद्दुर्बलोप्यकुतोभयः
त्रसति मृगयोः किंवा पद्मे मृगो विधुमाश्रितः।।

814 अनाघ्राताश्श्रौताः स्मृतिभिरुपदिष्टाश्च कमले
समीचामाचारैरपिच विदिताधर्मनिचयाः।
कथंकारं घोरं निरयमतियायामिति भयं
जहामिस्मृत्वा ते जगदवनि वात्सल्य जलधे।।

815 विवित्सा मात्सर्यस्फुरण दुरहङ्कार कुहना

पिशाचीभ्यो बिभ्य ज्जगदभयदानैकनिरतां।

नतां भूतेशाद्यै रपगमितरक्षोगणमदां

प्रपद्ये दासस्त्वां परमपुरुष प्राण दयिते ।।

816 जन्तोर्हन्त त्रिलोकी जननि तव समाराधने साधनेषु

व्यापारेष्वाभिमुख्यत्यजन भजनयो र्भीत्यभीती भवेतां।

सुग्रीवं वालि भङ्गे त्वदहित दमनानुन्मुखंरामकोपात्

भीतं पश्चात्तदास्थावहनगतभयं तत्र दृष्टान्तयामः ।।

817 रक्षःस्तोमोप्यखिल भयकृद्राघवप्राणकान्ते

त्रासोत्पत्त्यै नखलु भवति त्वत्पदाब्जानुकूले।

कष्टंमातस्तृणमपिभिये कल्पते त्वत्प्रतीपे

प्राच्ये साक्षी पवनतनयः पश्चिमे काक एकः ।।

818 कान्तारे महतीव संसृति पथेहन्त भ्रमन्तश्चिरं

विष्णोः प्रेयसि वानरा इव नरा वेलातिगग्लानयः

सम्पातेरिव सन्मतेरथगुरो र्बुध्वास्थितिन्तावर्कीं

आज्ञालङ्घन भीतिमम्ब जहतिप्राज्ञाहरेस्स्वामिनः।

819 पादाब्जं भजनादि कर्मणिसुरैर्यस्यैव कर्मीकृतं

यो धत्तेर्कयमेन्द्र वह्निमरुतां भीतावपादानतां

तस्याप्यम्बसकृत्कृत प्रपदनस्तेस्मीतियाचन् जनोपि

अत्रासार्पणसंप्रदानमभवद्देवि प्रसादेन ते

820 आरोढुं किल यत्सनीडममराबिभ्यत्यहिद्विण्मुखाः

तद्ब्रह्मापि तवाश्रयेण सुलभीकर्तुं न भीतोस्म्यहं

लेढुं डाडिम कल्परत्न खचितं राज्ञः किरीटं रमे

किं वा सर्वदुरासदस्य दयिता केलीशुकस्त्रस्यति

821 दातव्या स्वयमेव दाशरथये देवीति यो वीतभीः

अग्रे साग्रहमग्रजस्य कथयन्नार्तो दशास्यानुजः।

तस्मै त्वद्दयितेन दत्तमभयं प्राज्यं चराज्यं रमे

यत्स्वल्पं व्यसनं भवेत्तवकृते तद्भूयसे श्रेयसे ।।

822 तव साधु वर्ष्म नवसारसालये भवसागरान्तरवसादमेयुषां ।

अभयाय भात्यशुभयातु दीप्तिहृत् प्रभया सुवर्णनिभया मनोरमं ।।

823 प्रत्यासीदति मृत्युरन्वहमहो गत्यागतिभ्यां रवेः

पापीयानहमस्मि पापिनि जने कोपी च वैवस्वतः ।

किं किं वा भवितेति वेङ्कटपतेः क्रीडासखि त्रस्यते

मह्यं गर्ह्यतमाय मातरभयं देयादयाळो स्वयं ।।

824 पर ब्रह्मप्राण प्रणयिनि हरब्रह्ममघवन्

मुखानां लेखानामपि भयमभीतिश्च भवतः ।

निमेषोन्मेषाभ्यां तव जननि दृष्ट्योरिति महान्

अयं घण्टाघोषः क इह विमृशेन्मानमपरं ।।

825 घनार्तौ कार्तान्तः कदन निपुणः किङ्करगणः

भ्रमद्भिर्लोकाम्ब क्रुधमिव वमद्भिश्च नयनैः ।

प्रगल्भान्दुर्भीतिं प्रथयति यथामेन बहुधा

तथा शीतापाङ्गैः प्रसभमनुगृह्णातु भवती ।।

826 तत्तत्पापव्रजफलतयादारुणैस्तन्यमानाः

याम्याः श्रुत्वा मुनिवचनतो यातनाश्चेतनानां ।

कामं भीतः कमलनिलये कम्पमानाखिलांगः

विश्वस्य त्वामहमशरणोविश्व धात्रीं प्रपद्ये ।।

827 देशे काले सततविकृते देवि देहस्य वृत्तेः

ईष्टे शौरे रघजुषि जने तीक्ष्णकोपे च चित्ते ।

भीतिः प्रादुर्भवतिमहती शक्तिमत्या भवत्याः

कारुण्यार्द्रे मृदुनिहृदये चिन्तितेहन्त धैर्यं ।।

828 बाधन्ते विषया बहिस्सततमप्यन्तस्तु कामादयः

त्रातुं हन्तविपन्नमर्णवसुते धात्रादयोप्यक्षमाः ।

शक्तो यद्यपि केशवस्सतु दुराराधः स्वयं मद्विधैः
इत्युद्वेगवतो मम क्षमहरालोकात्वमेका गतिः ॥

829 वाल्मीकौ तमसान्वयो वलरिपौ भूयस्तरा मन्यवः
योगस्थेयमसंगति ईढगदावामिस्तु नारायणे।
रुग्णे क्षुद्रहितक्रमो भवकृतं दुःखं रतिप्रेयसि
त्रासः कुत्सित मौक्तिकेषु न पुनस्त्वत्संश्रितेष्विन्दिरे ॥

830 हन्तप्राकृत चक्षुराद्यविषये व्यापिन्यनिर्वाच्यतां
प्रामे विश्वजनिस्थितिक्षयपुषि ब्रह्मण्यनन्या
मातस्त्वामभयं विधातुमुषितां मन्ये प्रतिष्ठामहं
तस्मिंस्ते दरमन्तरं भवति चेत्कस्यात्र नस्या

831 दशमुखसहजन्तं देविनाम्नाऽर्थतोवापि
उदितमुखविकारं भीतमप्यूष्म
अकुरुतरघुवीरस्त्वत्प्रसादप्रभावात्
अभयवितरणेन क्षिप्रमानन्दसा

832 अल्पश्रुतेभ्य इव राशि मनादिवाचा मंहस्ततिभ्य इह बिभ्यतमर्भक
पुण्यैः पुराणवचनैरिव वीक्षणैस्त्व मुच्चैर्नृसिंह सखिमामुपबृह्मयेथाः

833 दुष्कालानुगुणक्रमैः श्रुतिपथाविष्कार निष्कासकैः
निष्कारुण्यतमैस्तुरुष्कयवनैर्निष्कारणद्वेषिभिः।
कञ्ञावासिनि तत्समैरपि जनैस्सञ्जायमानं भयं
त्वं जालेन दृशां हि तारयसि नः खञ्ञानिवाम्भोनिधिं ॥

834 काकाभयप्रदेति प्रश्नो यद्वाचकस्समस्तपदः।
स्वयमुत्तरतान्धत्ते रमा समस्तोत्तराविराजतिसा ॥

## 20. देवतान्तर परिसंख्या स्तबकः

835 वन्दारुरक्षणे दक्षां वन्दे गोविन्द सुन्दरीं।
यत्प्रसादादृते देवा स्सर्वे रक्षितुमक्षमाः ॥

836 अम्ब त्वया हन्त शरीर भाजा मरक्षितानामपि रक्षितानां।
देवामुदेवापुनरापदेवा भवन्ति किन्ते बलिवैरिकान्ते ।।

837 शीतस्वभावां भवतीं श्रितेभ्यो दिव्यां समृद्धिं ददतीमतीत्य।
उपाश्रितध्वंसकमुष्णमग्नि मुपासते के जगदम्ब लोके ।।

838 अज्ञातहमिममिते विभवेपिदीन बन्धुं विहाय भवतीं भवतोप्यवन्तीं।
सख्युरशुचेरपि समामिदमम्ब कार्श्ये कस्तं प्रभञ्जनमिहार्चतु गन्धवाहं ।।

839 यमविषयगतिस्स्याद्यद्गृहीतस्य जन्तोः
अमतिरमुमुपास्तां अप्प्रभुं पाशहस्तं।
जननिपरिगृहीतत्राण जातादरांत्वां
अहमखिल नियन्त्रीं अब्जहस्तां प्रपद्ये ।।

840 कुर्वाणं परुषैः करैः कुवलयक्लेशं भृशं सद्गण-
श्रीहार्यभ्युदयन्तमम्ब तपनं केचिन्नमस्कुर्वतां।
विश्वानन्दकरीं वयन्तु विदुषां विश्वाधिकां सम्पदं
तन्वानां प्रणमेम तत्र भवतीं तापत्रय ध्वंसिनीम् ।।

841 हरिसखि शतमन्युं वायसस्यस्वसूनोः
अपिविपदपनीतावक्षमं नो यजेयं।
अहमविदितमन्युं हन्त तस्य स्वशत्रोः
अपि परिहृत भीतिं त्वांशुभामाश्रयेयं ।।

842 प्रौढैश्वर्य जुषोपि यस्य सुहृदाभिक्षाकतानोज्झिता
यत्र श्रीदपदं वदन्ति विबुधारूढ्याश्वकर्णादिवत्।
यक्षन्तं यजतामधीर्वयममीत्वामिष्टदात्रीं स्तुमः
मातर्लक्ष्मि महाविभूति कमठो यस्यास्सखा ते हरिः।

843 प्रौढिर्यस्यहि पूर्वपक्ष विदिता यो लुब्ध चूडामणिः
यश्चाहीनमुखेन दूषितकलस्तं कः कळङ्काश्रयं।
अर्चेत्सोममपामरः श्रुतिशिरस्सिद्धान्तसिद्धोन्नतिं
पद्मे कांक्षितदां बुधस्तुतकलां त्वां निष्कळङ्कां विना ।।

844 पद्मे येषामुच्च भावो न नित्यो ये सर्वेपि स्थानभेदेन तीक्ष्णाः ।
यष्टुस्तुष्टिर्नग्रहांस्तानतस्त्वां नित्यौन्नत्यां नौमि सर्वत्र मूर्ध्नी ।।

845 शाखाबृन्द प्रथितविभवां सत्सुपर्णाधिरोहां
त्वामस्तुत्वा जलनिधि भुवं कल्पवल्लीमतल
आकांक्षन्तः फलमविकलं देव्यपर्णोद्भवं के
संसेवेरन् शरवणभवं स्थाणुजातं विशार

846 त्वांकृतश्रुति पथप्रवर्तनां सज्जनादरकृदाननां विना ।
निर्मितश्रुतिविचालनं रमे साधुवारणमुखं श्रयेत कः ।।

847 दुर्गां परे गाढभवानुषङ्गां शिलोच्चयादभ्युदितां श्रयन्तां ।
भक्त्येकलभ्यां भवसिन्धुनावं सुधाब्धिजे त्वान्तु वयं श्रयामः ।।

848 स्थानं यस्य श्मशानं सततमनुचरो भूतवेताळवर्गः
चेलं चर्मस्रगस्थ्नान्ततिरहहतमप्युग्रमेके भजन्तां ।
पद्मे पद्मेस्थितां त्वा मसकृदनुसृतां देवतायौवतेन
ध्यायेम क्षौमभाजं वयमनुदिनमामुक्त मुक्ताकलापां ।।

849 नाभिजातमधरीकृतहंसं जन्तवः कतिपये कलयन्तां ।
सेवते जगति हंसगतिं त्वां सिन्धुनन्दिनि सुधीरभिजातां ।।

850 चित्तवृत्तिरिह कञ्जमन्दिरे धून्वतीं दुरितपुञ्जमिन्दिरे ।
सिद्धयेजननि सेवतान्तरां त्वामनाकलित देवतान्तरां ।।

851 यद्यादधासि करुणां नदि वा न पद्मे
किन्दैवतैस्त्वदितरैरपवर्गलिप्सोः
तुष्टो यदि क्षितिपतिर्यदिवानतुष्टः
किन्नामशौरिसखि पारिषदैर्विवित्सोः

852 दृष्टादृष्टेप्सितपुषि भवत्पादपद्मावलम्बे
दिष्ट्या लब्धे कइह भजतां देवतां भूष्णुरन्यां
दृष्टे स्पष्टन्ननु दिनकरे दृश्यसन्दर्शनार्थं
दीपारोपव्यसनमजडो देवि कः स्वीकरोति ।

853 तव जननि जयन्त्याश्शाश्वतैश्वर्यदात्र्याः

परिमितफलदात्रीर्देवतास्सेवते कः ।

फलभरनतसस्यां प्रास्यचोळक्षितिं किं

प्रकटमटति विन्ध्यप्रान्त्य भूमीरमूढः ॥

854 तव जलनिधिकन्ये दैवतैः पामरोन्यैः

कलयतु समतामप्यन्ततः किन्ततस्ते ।

दरमपि गरिमाणं दर्दुरीकर्दमायाः

विबुधपुरतटिन्या वेत्ति किं पल्वलेभ्यः ॥

855 विष्णोः पत्नि भवत्प्रसादविरह व्यावर्तमानश्रियां

संपत्तिष्ठति सानदीर्घमुदिता या क्षुद्रदेवार्चनैः ।

अन्नालाभ[illegible]षां कुक्षौ पुनः पीनता

कष्टश्वासनिरोधनैरुपनता कालं कियन्तं क्षिपेत् ॥

856 कल्याणं भवतीकरोति भजतामेकापि लोकाम्बयत्

संभूयापि च देवतान्तरशतं नैतद्विधातुंक्षमं ।

राकाचन्द्रिकयैकयापि सुकरं विश्वप्रजाह्लादनं

नैकाभिर्ननुतारकाभिरपिवा नो शक्यनिष्पादनं ॥

857 ननु तव पदाम्भोजद्वन्द्वे निविष्टमना मनाक्

अपि न तनुते देवेष्वन्येष्वमेदुरमादरं ।

ललितमृदुळेलब्धाश्वासो रसालकपल्लवे

कलयति पिकः कञ्जावासे करीरदलानि किं? ॥

858 मातः पद्मे [illegible]मत्येतुकामः मुक्त्वा कस्त्वाम्मानयेत्क्षुद्र देवान् ।

प्रौढान्नावं प्रास्य सिन्धुन्तरिष्यन् कः [illegible]नं कश्चिकीर्षेत् ॥

859 सन्दत्ते सकृदर्चितापि भवतीस[illegible]ज्यमत्यूर्जितं

त्वद्भिन्नैस्तु किमस्तिदेविबहुधाप्यासेवितैः दैवतैः ।

संशुद्धिं सकृदीक्षितोपि दिशति श्रीरामसेतुर्नृणां

अर्थः कोस्ति तटाकसेतुशतकैरश्रान्तदृष्टैरपि ॥

860 देवित्वत्पदपद्मवन्दनधनादुर्दैवतोपासना

लब्धंमुग्धवधूकटाक्षतरळं नैवाद्रियन्ते धनं

वेधाविष्टपचित्रसृष्टिपटुधीरर्थक्रियादूरगं

व्यामोहावहमैन्द्र जालिक जगत्सृष्टं किमु श्लाघते

861 सत्यप्यागसि संश्रितान्करुणया संरक्षसि त्वं रमे

क्षोदिष्ठादपराधतोपिभजते कुप्यन्ति देवा: परे

छेत्तृणामपितापमम्ब हरते शाखीनिजच्छायया

गाढस्पर्शत एवपोषकमपि घ्नन्तिक्रुधापन्नगा:

862 सुभूयानायासस्सुखमगुरुदुर्दैवतजुषां

प्रयास: क्षोदीयान्फलमतिमहत्त्वान्तु भजत

लघिष्ठो लाभस्याल्लवणवणिजां श्रान्तिरधिका

भवत्यल्पो यत्न: फलमलघुकर्पूरवणिजां

863 स्थास्नु श्रेयस्स भजति रमे यत्पदं त्वत्कृपाया:

बाधोदर्कं विभवमुपयात्यन्यदेवोपसेवी

दृष्टान्तोन्त्ये गिरिशभजन प्राप्तभूतिर्दशास्य:

तद्भ्राताद्ये तव करुणयालब्धनिष्पङ्कसंपत्

864 त्वाम्मातरुपासीना नदेवतान्तरमुपासते सन्त: ।

लब्धेनिधौ निरवधौ कदर्यजनसेवनं सहन्ते के ।।

## 21. दशावतार स्तबक:

865 दशास्वप्यवतारेषु देवो यद्रूप संप्लवात् ।

साधयामास कार्याणि सतान्तस्यै श्रियै नम: ।।

866 देवि त्वया लब्धदयारसेन देवेन मात्स्यं वपुराश्रितेन ।

आश्चर्यमष्टश्रुतिरप्यनष्ट श्रुतित्वमापद्यत पद्मजन्मा ।।

867 भूयिष्ठान्तवदृष्टिरेव कमले भूतिञ्चिरात्प्रोषितां

प्रोप्यानयति क्षणादिति नृणां वक्तुं घृणावारिधिः।

देवस्तावकदृष्टिरूपमनघं मीनावतारे वहन्

धात्रेदत्तसतांश्रियं श्रुतिमयीं दैत्यापनीतां पुनः ।।

868 साहिश्रीरमृतासतामितिननु त्वन्नामधेयाश्रयात्

त्वद्दास्यं भजति श्रुतिस्स्वयमिति प्रामादरः श्रीधरः।

ताम्मग्नां पुनरुद्धरन् जलनिधौ तापार्णवादुद्धरेत्

त्वद्दास्यैकधनान् जनानितिरिमे धैर्यं[illegible]र्तिनः ।।

869 देवो देवि त्वय्यसौ दानवानां हन्ताहन्तामन्दरागन्दधेयः।

धर्मं कौर्मं धारयन् त्वत्सहायो मातस्सोयम्मन्दरागन्दधार ।।

870 उरसिसरसिजालये वहंस्त्वां शिरसिदिधीर्षुरिळां त्वदंशभूतां।

स्वयमयमचिरात्पराहतारिस्सहरिरुवाह वराह दिव्यदेहं ।।

871 दैतेयेन बलात्पयोधि जठरन्देवी मही प्रपिता

मातस्तेस्वसृ भावमेवयदगादेकोदरस्थानतः।

तस्मादेव कृतादरेण तरसादामोदरेण स्वयं

दध्रेसौ कुहनावराह वपुषा देवेन दंष्ट्राञ्चले ।।

872 पद्मे चक्र भृतो नृसिंहवपुषः प्रह्लादसंक्लेशन-

[illegible]रापुण्यहिरण्यदेहदळनावेलातिवेलोदयः।

रोषाग्निश्शमितस्त्वया बत पयोराश्येकशोष्योपि तत्

पुत्र्याशक्तिरुदेति कारणगताप्रायेण कार्येष्वपि ।।

873 शरण्य भूतां श्रुतिरिन्दिरेयां हिरण्यवर्णां हरिणीमभाणीत्।

सादिव्यसिंहस्य हिरण्य भेत्तु र्निश्शङ्क मङ्के रमसे कथन्त्वं? ।।

874 अवनमेव सदा कलयन् गज व्यसन भङ्गकृदद्भुत केसरी।

हरिणरक्षणदृष्टिरयं त्वयाप्यबलयाम्ब गुणेन वशीकृतः ।।

875 हर्यक्षोयं हरिरिति वचस्त्वय्यनाभूतपूर्वं

न प्रह्लादोपचयकरता नो हिरण्याङ्गदत्वं।

तस्मादस्मज्जननि परमं विस्मयं ते विधातुं

नाथोपूर्वं किमिह जगृहे नारसिंहं शरीरं

876 तत्तादृक्षहिरण्यदाननिरतौ भक्ताभिरक्षाकृते

सत्कीर्तिं हरितां मुखे खलजनत्रासावहामाश्रितौ

[illegible] पापहरण क्रीडोचितालोकनौ

देवि स्तौमि मिथस्समानचरितौ दिव्यौ युवां दंपती

877 वक्षस्स्थामपि वर्णितानुसृतये कृष्णाजिनेनावृणोत्

देवस्त्वामिति वर्णयन्ति कतिचिद्ब्रूमो वयंत्विन्दिरे

भव्यं वामनरूपमेत्य भगवान् भाग्यं हरिष्यन्बले:

एनं कर्तुमगोचरं शुभपुषां त्वद्वीक्षितानामिति

878 वर्णित्वमर्णवसुते वहतापि गूढं वक्षस्तटे हि न धृता वनमालिना चेत्

कस्त्रीणि दास्यति पदान्यपि याचतेस्मै कस्माज्जगत्त्रयतया विवृद्धिरेषा ॥

879 दैत्यादेत्यहिकुप्रतिग्रहमहो वृध्याच पुष्णन् तनुं

गोत्रघ्नावरजोमृषावटुरधः पातञ्चदातुर्दिशन्

पात्राकारमगा दधावळिहृतो ह्यम्बते धारणात्

धात्रा सञ्जगृहे तदस्य शिवता संपादकं पादकम्

880 वासस्ते क्व वटो गुहास्वशनमप्याकांक्षितं तेघनं

मां जानीह्यघनाशनादरमये किन्ते विवाहे स्पृहा

मात्रीमे दिशगां पदत्रयमितां लोकत्रयी सा ममेति

उक्तिर्दिव्यवटोर्निशम्य तदुरस्यम्ब त्वया सिष्मिये

881 श्रीमान्निःस्वइवैष वामनतनुः प्रत्यग्रहीद्द्रां क्रतौ

इत्थं दुग्धपयोधिजेतव परीहासोक्तिभिर्व्रीळित

अंशेनार्पितसन्निधि भृगुपतौ पूर्वावतारार्जितां

तामेनां पुनरध्वरे स भगवान्नूनन्ददावृत्विजे

882 बाहाकल्पे भृगुकुलपते र्वज्रकल्पे कुठारे

संग्रामेषु त्रियुग सखि ते सन्निधानं भजन्त्या

क्रोधोन्मेष क्षपितविमत क्षोणिपश्रेणिलक्षं

ग्रीवोत्थासृग्घुसृणमसृणं गात्रमत्यर्थशोणं ।।

883 बिभ्राणे स्वधितिं समिद्धरणतो मन्युप्रपोष क्षमं

लोके शास्त्रविचक्षणे नृपकुले ज्याधर्मसंस्थाकरे ।

भेजाते ननु दुर्घटार्थ घटिनि त्वद्वीक्षणाद्भार्गवे

सामानाधिकरण्यमर्णवसुते ब्राह्मण्यराजन्यते ।।

884 पञ्चास्यत्वजुषा पुरा भगवता योसौ हिरण्यासुरः

पञ्चत्वं गमित स्सएव जननि स्पर्धाभिवृद्धाग्रहः ।

भूत्वा तद्द्विगुणाननो जितजगद्भूयस्त्वदागोग्निना

दग्धो हन्त चतुर्मुखास्त्रनिहतोप्येकाननस्य प्रभोः ।।

885 समाश्वान्वयशालिना दशरथप्रामोदयेनापि ते

नेत्रापत्ति विवर्जितेन कमले मुक्तद्विपेन्द्रेण च ।

निस्संख्याश्वकुलो रथायुतयुतो निस्सीमपत्तिच्छटः

त्वद्द्रोहादगणेय कुञ्जरगणोप्यस्तोरणे रावणः ।।

886 रघुवरकृतशङ्का भङ्ग दम्भेन लङ्काऽऽ-

मिष भुगशुचि सद्या स्वादनैः कृष्णवर्त्मा ।

अशुचिरिह भवत्या पावितो देवि सत्या

सवहति शुचि संज्ञा न्तद्वदन्त्यन्यथाज्ञाः ।।

887 अखण्डं कोदण्डं प्रभुरदळय त्खण्डपरशोः

अगृह्णाद्रामस्य प्रसभमपि चाकुण्ठपरशोः ।

अबध्नादप्युद्रां निधिमथदशग्रीवमवधीत्

महाश्चर्याश्चर्यास्त्वयि कृतधियोस्याम्ब सुकराः ।।

888 सङ्कल्पतस्तव समीरसुते हिसीते शीतो बभूव दहनश्चिरमेधमानः ।

मातर्जगद्भ्रमनिवृत्तिकृते विशन्त्यां

शीतः कुतस्सन भवेत्त्वयि देवि साक्षात् ।।

889 नीलाम्बरो हलधरो ननु हन्त भास्वद्भू

भेदनैक रसिक श्शुभशालिवृत्तिः ।

श्यामाक लाभरत एष विवृद्धमोहो भोगी बभूव भुवनाम्बतव प्रसादात् ।

890 श्यामात्वमम्ब दयितश्च तवैष कृष्णः

गाङ्गेय योगमुदितस्सच रुक्मिणी त्वं

त्वं स्वादु वाक्स च युवा मधुरोदितश्रीः

दाम्पत्यमेतदनुरूपमितो मिथो वां ।

891 रामानुषङ्गविहृतौ रचिताभिलाषं मातस्त्रिलोचनजितं भवती मनोज्ञं ।

पित्रा समानगुणमात्मभुवं प्रसूय पञ्चायुधं कमपि रुक्मिणि लब्धहर्ष

892 गम्भीर भावाहि कृतार्थकृष्ण सम्पन्नटीकाश्रुतिमञ्जुसूक्तिः ।

गीतेव कृष्णानन सौरभज्ञा ध्येयासि मातश्शुभयोग भाजा ।।

893 घनमहानवनीत हृदाश्रित व्रजविपत्ति हराहरिवल्लभे ।

प्रबलभद्रविकास विधायिनी त्वमयसे निजवल्लभतुल्यतां ।।

894 प्रायोध्यानगरीयसां सुमनसां मायातमश्छेदिनी

त्वं काञ्चीमधुरावलग्नसरणिः क्षोभादवन्ती जगत् ।

संभोगैस्स्वदसेस्म देवि जलधेरुद्वीचिकाशीकरे

स्वैरं द्वारवती पुरे विहरते कृष्णाय तृष्णायतैः ।।

895 म्लेच्छान्जयानकरवानपि मूर्छयित्वा

निर्वापयिष्यति कलिं हविराध्वरञ्च ।

कल्की तमांसि परिपास्यति भूसुरांश्च

पद्मे भवद्वचनपल्लवितानुकम्पः ।।

896 मलिनकलिकालेशैश्शाखापरिक्षयदूषितैः

अपगत सदामोदैरत्रासुहृद्यवनैर्वृति ।

शमयितुमनाश्शाखि ग्लानिं भविष्यति माधवः

जलनिधि भुवा वृद्धिं लब्धा त्वया चमहावनि ।।

897 वातव्रात इवावधूत कलिको मातर्महारण्यवत्

खड्गी तापसवत्कृतार्थ जननः कल्की मुदे देविते ।

अम्लेच्छां स्वयमातनिष्यति महीमांध्रीयजिह्वामिव

स्वामी स श्रुतिमार्गगानिहजनान्कर्तार्थशब्दानिव ।।

898 मात्स्यज्योतिषि मन्दरक्षणपरेऽनन्तोच्चहर्षावहे
हर्यास्यस्पृशि चारुवर्णिनि कृताशेषाधिकोपक्रिये।
एणश्रीमुषि कामपालविभवे कृष्णे कलिध्वंसने
देवि त्वद्दयितावतारदशकं ध्यायाम्यपाङ्गे तव॥

899 कृष्णः केशो दृगेषा झषतनुरधरो मन्दरागंहि धत्ते
सौकर्यन्दोष्णयुरोजे किल मुखहरिता मध्यमात्तावलिश्रीः।
रामाग्र्यत्वं नितम्बः प्रथयतियमुनादर्पहृद्रोमवल्ली
धत्ते जंघाभिरामश्रियमिह कलिहृत्पादपद्मन्तव श्रीः।

900 विदितगुणालङ्करणं विचित्ररचनाविचक्षणप्रेक्षं।
कविमिव कृतदशरूपक मरबिन्द गृहेभिनन्दसि मुकुन्दं॥

## 22. चित्रस्तबकः

901 कमलायतनां चित्ते कलये यत्पदाम्बुजं।
चिरं विबुधसन्मौळिचित्रस्तबक भूषितं॥

902 वेदानि सर्वशास्त्राणि विभाव्य भवतीं रमे।
दास्यं यस्यास्तवोपैति देवी सापि सरस्वती॥

गोमूत्रिकाबन्धः

903 कमलेदेवदेवस्य महिषि त्वं स्तुतक्रमे।
विमले देवि देह्यस्य महितत्वं नतस्य मे॥

904 पाहि देवि कलशोदधे स्सुते देहि पाप विलयन्दयानिधे।
शेषशायिदयिते तमोमुषं शेमुषीं कलयनस्सुशोभनां॥

905 संश्रितानवितुमास्थया दया सारिणीह दिगधीशसेविता।
स्वप्रियस्य कलयन्त्युरः पदं सम्पदं दिशतु सा हरिप्रिया॥

906 श्रीरशेषजगदार्तिहारिणी शेषशैलतटशेखरायिता।
राजसे जननि रक्षणायन स्सागरेन्द्र तनये सदातनी॥

907 हरेः प्रिये भगवतो हतसंश्रितसाध्वसा ।
अन्वहं क्रियमाणानां अंहसां संहतीरयात् ।।

908 पायान्मामुरसावितश्रियमुमाराध्यां प्रपद्ये तमां
कोवानस्थिरमश्नुतेशमधनोप्यालोकितो जातुचित्
वेदान्तैर्विनुताङ्घ्र्ये न किमुत श्रेयोनतिन्तन्वतां
सेवामोरचयामि मानस सदा भक्त्यावहावादरं

909 कालीनाननं नालीकाराधिता हि हिताधिरा ।
मायारनाम्मसायामा कापिदीप्रप्रदीपिका ।।

910 सारयादरिहाख्यासौ सौख्याहारि दयारसा ।
मय काय धरा माता तामाराधय काय मे ।।

911 कारिताभिमताचित्ता वासेहारि तमा रमा ।
मारमातरिहासेवात्ताचितामभितारिका ।।

912 कापिमासरसासात्राभिळापाकरनामका ।
कायिनारिहरासेवाग्रनावास्तुतिवाचया ।।

913 याच्च वाति स्तुवानाग्र व्यासेराहरिनायिका ।
कामनारकपालाभित्रासासार समापिका ।।

914 अच्छभावा फणिशये जगन्नाथे झषाङ्कदा ।
आरूढाघखलापीडो च्चाटकर्द्धिंहि सौति मा ।।

915 दार्दयदाममेहदेहे सात्रासाललमेऽन्तिमे ।
खेदिखेऽहहयानेया तार्क्ष्येताद्यद्यतामिता ।।

* द्विशृङ्गाटक चक्र बन्धः *

916 मयिते पद भक्तेऽस्मिन् प्रसीद कमले हिते ।
तेजसा दहशक्ते द्य क्षिप्रमुद्यदघं मम ।।

* द्विचतुष्क चक्र बन्धः *

917 भजेमहि हरेः कान्तां कारुण्यरसपूरितां ।
भवामयहरां कामं कार्पण्यत्रासहारिणीं ।।

* चतुररचक्रबन्धः अष्टदलपद्मं *

* चतुर्दळगर्भद्वादशदळपद्मञ्च *

918 मावतादत्र परमा मारपस्वाक्षिकाळिमा ।
मालिकाभिस्समेतामा मातामे विधुतावमा ॥

*गोमूत्रिका बन्धः षोडशदळपद्मं *

* द्विचतुष्कचक्रबन्धः अष्टलक्ष्मीचक्रञ्च *

919 क्षमासमागमा भीमा रामाणामादिमासमा ।
क्षमा क्षेमा रमा नामा प्रमार्गीमासुमातिमा ॥

* अर्धभ्रमकयमकं *

920 दयासारासाहितासा याशु भामतिपालिता ।
साभाकारा भाव पाहि रामरामा विभाति सा ॥

* शरबन्धः *

921 समुद्रजोन्नतान्कुर्यात्सानस्संसारतारिका ।
समुद्रजोन्वितान्क्रौर्यात्पुनस्त्रासान्वितारिका ॥

* मुरजबन्धः *

922 इन्दिरा भासुरा पद्म मन्दिराप धरापहा ।
हापराधहरा दृष्ट्या सापराभासुराहता ॥

923 काकाननन्देदेवि विपापाहह भूभूराराददरारा ममनानाममहेहे ।
यायाममखेखेदद नानाघघनानात्वंत्वंगगदादाववनीनीततमामा ॥

* गरुडगतिचक्रबन्धः *

924 मारमाताहि भात्युग्र रविमाहित भाग्रमा ।
मानिता विधिभीतानां हृतदुर्गत्युरुश्रमा ॥

* चतुरङ्ग तुरङ्ग बन्धः *

925 पामराज्ञानतरिका च्छायापासंमतातुला ।
तापनोदनहासैका रमानतसुरावतात् ॥

* (तुरङ्गपदोद्धृतः) *

(पापसंहारिका रातु मनोज्ञाननसंमता ।
ज्ञानपामादयाज्ञाता च्छामापापापरादरा ।।)

* सर्वतो भद्रं *

926 रमासदादासमार मानदाननदानमा ।
सदाशयायाशदास दानयागगयानदा ।।

* त्रिस्वरं स्वरचित्रं *

927 समर्थयस्व सकल क्षितिस्थितिविनिर्मितिं ।
मुमुक्षुघुद्रुरुमुत्समुद्रदुहितः स्वयं ।।

* एक स्वरचित्रं-(आकारस्वरं) *

928 पारावाराज्जातामाता पायापायात्त्रासाद्दासान् ।
साराकाराजास्याख्याता साराकारा नागाद्र्यामा ।।

* त्रिव्यञ्जनं *

929 रमेरामेमुराराते मारमातरतीतरे ।
ततंतिमिरमेतत्तु मतितोतितरामिते ।।

* द्विव्यञ्जनं *

930 कालेकिलालौकिकैक कोलकालालके लल ।
कलिका काल कल्लोलाकुलल्लोकाल्लिलालिका ।।

* एकव्यञ्जनं *

931 ररोररेररररुरो रुरूरुरुरुरोररे ।
रेररारेराररेर रारेरारिरिरारिरा ।।

* एकव्यञ्जनं *

932 मामाममामममेमामा मामूमामेममामममे ।
मामामेमिमिमेमाम ममोमामाममामिमां ।।

* द्विव्यञ्जनं *

* सर्वतो भद्रं *

933 मामानमामानमामामानमाननमानमा।
नमानमामानमान मानमाननमानमा।।

934 मायामायामायामाया मायामायामायामाया।
मायामायामायामाया मायामायामायामाया।।

* कविनामाङ्कितमष्टदलपद्मं *

935 मासारक्षापरस्या वनगगगनवत्याघुणत्स्वाशहेमा
माहेशस्वास्थ्य नाकादि पददपदित्ये धयन्तीहतामा।
माताहंतीति सूतेरचिततचिरस्थानुकूल्यावनामा
मानावल्या प्रकृष्टं परमममरपप्रीतिरक्षारसा मा।।

* कविकाव्यनामाङ्कितं महाचक्रं *

936 वक्त्रावेक्षित कर्मकुक्षितिभुजां नोसर्वदायद्दृशां
पत्यङ्कस्थितिमत्र विन्दति भयं साहर्तुमृज्वर्थिनां।
भिक्षाटस्वमलात्मदुर्गतिहराजस्रंमतानः परा
राजीवावस्थापराधिभिदुराशान्तात्मनां भासुरा।।

* अष्टारचक्रं *

937 आर्तं वेदयमीड्यसारमहिमश्रीवत्सगौकः स्पृश
त्रेतांकस्थिरमान्तनुत्वममलामातंगिरि वीन्द्रपा।
यत्राटानलसप्रताप मचलद्दासे हरीन्दुःस्थले
वन्द्यार्यव्रजकल्पक क्रमतया ज्ञानप्रदानासि न।।

* मध्यमवीथीगवाक्षबन्धः *

938 वेषङ्कलिविकटाशुभहरमार्यत्राणदं वृषाद्रौत्वं।
श्रीरयसे करुणारस पालितलोका हरस्यजस्रमकं।।

* भिन्नवृत्तश्लोकानुलोम गोमूत्रिकाबन्धः *

939 जयति सा जलधीश्वरकन्यका भवभयातुरमाहशपालिनी।
विकसितारमणस्य कृपावतो मनसिपालयतो व्यसनान्नतं।।

940 कायभासाचलद्धिश्व मुत्कलिपिका देवतायास्फुरत्याहतापावनी।
लोकमातामम्नस्यतः पापतो ज्ञानमापादयत्वव्ययानाधितं ॥

* भिन्नवृत्तानुलोम प्रतिलोम गोमूत्रिका *

941 विदितानिगमे विषमेषु तनौ रसिके निरता वृषभाद्रिविभौ।
मम दास्यवतो विमलावसथे कृपया दुरितं सहसे कमले ॥

942 समस्तसेव्या सदरिक्षयादिकृल्लसद्विलासा विभवप्रदाम्मम।
रविप्रभात्वं वृषरक्षिकेस्फुर स्तुतक्रमे देवि जगद्धिता भुवि ॥

943 नाशिता पत्तिना नाकसम्मादिना नादि नेत्राधुनानाधिनीं विष्णुना।
नापचारादिना नामयात्सज्जनान् आवितुं मां विना नाश्रयान्याघना

944 भक्तिजिह्वासुधा नित्यमिष्टक्रिया कारिकाकारिका कारिकाकारिका
साशुभा यास्मिमे त्वं समृद्धिं रमे नामयानामयानामयानामया ॥

945 गृहाणिनस्त्वं परमे रमे रमेह्यपाकृतापावधिकाधिकाधिका।
जडाअपि त्वन्नयनायनायनादहोनृकर्णोत्सवदावदावदाः ॥

* भिन्नवृत्तानुलोमप्रतिलोम गोमूत्रिका *

946 सामामापातुदयया शमदा भास्वराळका।
दासावनीवरमहा भाविता नारदादिना ॥

947 क्षेमातापामिद भाया कमला भासुरालोका।
सासावानीतरसा हा भुविलूनापदाताना ॥

948 आदित्यैरर्च्येताग्राभा धीमज्जीवस्तावह्लादा।
सा लक्ष्मीस्स्व श्रीदा क्लेशग्लायद्यातुस्तोमावासा ॥

* भिन्नवृत्तानुलोमप्रतिलोमगोमूत्रिका *

949 मास वास्सरसाराव वरासारसवासमा।
मासवास्सरसाराव वरासारसवासमा ॥

950 पद्मे वासोप्यहह सुमनः कोमळं क्रान्तिकृत्ते
पद्मेवासोप्यतिमृदुतनो स्स्साहसेनेतिसिद्धे।
आयासित्वन्नकथमधुना[illegible]चारात्
आयासित्वन्तदिह कृपया सह्यतां साहसम्मे ॥

951 नियतं नमांसि विदधीमहि ते निगमप्रतीपमनसा महिते ।
जगदम्बजम्भरिपुणा महिते मुनयो जपन्ति तवनामहिते ।।

952 भयानकमलालयन्नतिभयेन जिह्वामिमां
स्तवैर्नकमलालयं हुतभुगुष्णया तृष्णया ।
भजेयकमलालयन्त्वहमितः परन्तन्महः
धुताधिकमलालयं नहि भजन्ति यत्संश्रिताः ।।

953 हयरूप धरो य आसमस्ते श्रितलोकः कलयामुनासमस्ते ।
जुषतेधिषणाविकासमस्ते दुरिते देवि भवद्दृशा समस्ते ।।

954 जननितटित्प्र भवपुषे प्रभवपुषे संपदान्नमस्तुभ्यं ।
वशित वृषाचलविभवे चलविभवे मास्म मां प्रवर्तयथाः ।।

955 हृतसुखवारिजनिलयं वारिजनिलयं रमाभिधं ज्योतिः ।
हृदयसदानममहितं नममहितं तदितरेषु पतनन्ते ।।

956 प्रपदन भारत्यागोभारत्यागोन्मुखस्य मे सोढ्वा ।
कमले रक्षसि कलितोरक्षसि कलितोग्रदुष्कृतेभयदा ।।

957 कृतहिंसारंभान्तं सारम्भान्तं रमे तवापाङ्गं ।
अर्थितरक्षोपाये रक्षोपाये पटो निधेहि मयि ।।

958 जनमनुकम्पारम्या कम्पारम्याद्रमे न मोदयसि ।
कृतहितयाचित्राणायाचित्राणांनिधिस्त्वमखिलानां ।।

## 23. सङ्कीर्णस्तबकः

959 समस्तगुणविस्तार समावेश निवेशनं ।
वन्देऽरविन्दनिलयं वरदं परदैवतं ।।

960 औदार्यशेव धिरनिन्दित कान्तिसिन्धुः
ओजः प्रसादनिधिरुज्वलसौकुमार्या ।
वैदर्भरीतिरिव वारिधिराज कन्ये
श्लाघापदं भवसि सारविदां कवीनां ।।

961 आरम्भमेत्य महनीय ममोघयत्ना
प्राप्त्याशयाश्रितपदा परमेप्सितस्य।
नित्यं फलं कलयसे नियतामिभाजा
नाथेन नाटक कलापरिपाटिकेव॥

962 व्यामाप्रसिद्धाश्रितपक्षपाता बाधानभिज्ञा प्रतिपक्षशून्या।
समीहितं साधयसि ध्रुवन्नस्सद्धेतुवद्दुग्ध पयोधिकन्ये।

963 प्रकृतिरुचिरमूर्तिः प्रत्ययानां विधात्री
समधिकगुणवृद्धिस्साधुतामादधाना।
सृजसिपदमजाद्यैरीप्सितं द्रागनन्त
स्थिरफणितिविधेया शब्दविद्येव पद्मे॥

964 अधिकरणविचारारम्भसीदद्विपक्षं
किमपि विशदयन्त्या कृत्स्नवेदार्थतत्वं।
गळति गहन कर्मालम्बनम्मोहजालं
कमलमुखि भवत्या कर्म मीमांसयेव॥

965 चतुराकृतिल क्षणाभिरामा परदेवस्य गुणान्प्रकाशयन्ती।
उपदर्शयसेऽपवर्गमार्गं मम शारीरक भारतीव मातः॥

966 सुवर्णश्रीरम्यं शुभकरपदर्चं श्रुतिकुलं
भवद्रूपञ्चेदं भवति महितं ब्राह्मणगणैः।
तयोरित्थं भेदः स्फुरति तटिनीजानितनये
बुधेन्द्रैरध्येयं प्रथममितरद्ध्येयमिति च॥

967 व्याकोचवारिजधरां द्विजराजसेव्यां
अव्याहताममृतशैवलिनीमिव त्वां।
निस्सीमसंसृतिनिदाघ विदाहतमाः
केचित्सुधाब्धितनये कृतिनो भजन्ते॥

968 वात्सल्यंतव राघवप्रणयिनि व्याचष्ट काकासुरः
शक्तिं दुर्घटसाधनीं हनुमतश्शीतस्स वालानलः

औदार्यं त्वदपाङ्गलब्धविभवोल्लासामहेन्द्रादयः

कारुण्यं कृपणा वयन्तुविगुणा निर्हेतुकं रक्षिताः ।।

969 दोषौघश्शरणं जगाम गुणतामादित्सुरङ्गानिते

कौटिल्यं किमपि भ्रुवौ कठिनता कल्याणि वक्षोरुहौ ।

दारिद्र्यं बत मध्य भागमधरं रागस्तमः कुन्तलान्

चापल्यं दृशमम्ब मन्दगतितापादौच मौग्ध्यं मुखं ।।

970 कृतस्त्वयादेविकृपाकटाक्ष लेशैरहं श्लोककृदर्भकोऽपि ।

परन्त्वहं श्लोककृदित्यभीक्ष्णं कदानुगायेयमिति प्रतीक्षे ।।

971 आगस्तर्तिं मे किमदृश्यविद्या मध्यापयस्यब्धिसुते तथा त्वं ।

सविश्वतश्चक्षुरधोक्षजोपि नपश्यतिव्यक्ततमां यथैनां ।।

972 रक्षेतिनाथसविधे तव गाढमुक्तिः

यद्युद्गता मम भवे त्तत एव मुक्तिः ।

एतावति श्रितमनोरथ पूरणेस्मिन्

कृष्णप्रिये ननु तवापि कियान्विचारः ।।

973 यद्युन्निनीषसि यदूद्वहवल्लभे मां

कर्माणि कारय तदा कलुषोज्झितानि ।

नैर्घृण्यमेषि यदि वा न ततोपि दूये

नैराश्यमेव हिसुखं निगदन्ति सन्तः ।।

974 नैवापवर्गमतिदुर्गममर्थयेऽहं

न स्वर्गमम्ब न ततोप्यपरं च सौख्यं ।

अभ्यर्थये हरिसखि त्वयिभक्तिमात्रं

अत्रापि चिन्तयसि चेदथ किं करोमि? ।।

975 माकोपं कुरु मातरेकमधुना जल्पामि धृष्टोवचः

शक्तिः कर्तुमकर्तुमन्यथयितुं जागर्ति येयं त्वयि ।

तल्लेशो मम चेदसेत्स्यदमृतं सर्वाननेष्यं क्षणात्

[illegible]पेक्षसे घनकृपाकस्मात्त्वमस्मानिति ।।

976 सौन्दर्यस्यनिधिर्मुदामुदयभूस्सम्पत्ति मञ्जूषिका
कान्तीनां निलयः कलाजलनिधिः क्षान्तेर्निशान्तस्थली
दाक्षिण्यस्य शरण्यसद्म कमले दातृत्व विश्रान्ति भूः
आस्थानी यशसां प्रपासि सतृषा माद्यस्य पुंसो धनं

977 मोहोन्मूलनमूलिका भवजुषां मोक्षाध्व निश्रेणिका
चेतश्शुद्धिविधानसिद्धगुळिका चिन्तातमश्चन्द्रिका
विद्याविभ्रमशालिकासि कमले विष्णोरुरोमालिका
मातस्त्वं मम पारिजात लतिका मोदांबुधे वीचिका

978 विपाकः पुण्यानामपि च विकचाम्भोरुहरुचां
विवर्तो हर्षाणां विततिरमृतानां परिणतिः
विकारः कारुण्यामृत जलधि वीची परिषदां
विकल्पः कल्पद्रो र्जननि तव वीक्षा विजयते।

979 प्रज्ञालतानां किमुपघ्नयष्टिः पनायतां कामगवी नवीना ।
प्रपञ्चमातस्त्वमकिञ्चनानां प्राणप्रतिष्ठा परमासि काष्ठा ।।

980 अस्मादृशामभ्युदयाङ्कुरो वा नाथस्य पद्मे नयनोत्सवो वा ।
दिव्यौषधं वा दुरितामयानां पारं परं वा भवती भवाब्धेः ।।

981 ताटङ्करक्षां त्रिदशाङ्गनानां तरङ्गिणीजानितपः फलं श्रीः ।
दारिद्र्यविद्रावणमूल विद्यां जगुर्जगन्नायकजीविकां त्वां ।।

982 परिष्कृतिं पङ्कजकाननानां परायणन्नश्शरणागतानां ।
सन्तश्शकुन्तध्वज सुन्दरि त्वां सर्वस्वमाहुस्सकलागमानां ।।

983 परिकर्मविनिर्मलं मुरारेः प्रतियत्नं प्रतिबुद्धशेमुषीणां ।
भवतीं भवतीक्ष्ण यातनानां अभिचाराहुतिमाहुरब्धिकन्ये ।।

984 मुनिमानसराजहंसिका वा मुरभित्कल्पक मञ्जु मञ्जरीवा ।
श्रुतिपञ्जरदिव्य शारिका वा जननि त्वं गुणरत्न पेटिका वा ।।

985 प्रतिसृष्टिरियं तटिल्लतानां परिणामोनुशिरीषमञ्जरीणां ।
प्रतिभातिहृदि त्वदीयमूर्तिः परिवृत्तिर्हरिपत्नि काञ्चनानां ।।

986 प्रस्तावना भुवनपालन नाटकस्य

प्राच्यादिशो धवळिमा भव काळरात्रे: ।

दुर्गर्विसर्वरजनीचरधूमकेतु:

र्दोषद्रुमस्य परशुस्तव देवि रूपं ।।

987 आलानयष्टिरसि योगिमनोगजानां

आशापिशाचपरिमोचन यन्त्रविद्या ।

कार्तान्तलोक गमन प्रतिरोधमुद्रा

कारुण्यपुण्यतटिनी कमलालये त्वं ।।

988 शरदन्तमोघनानां शाश्वतसुखसम्पदा मुपोद्घातं ।

शरणं व्रजामि कमले शौरिवशीकार मूलिकां भवतीं ।।

## 24. निर्वेदस्तबक:

989 शरणीकरणीयांघ्रिं शश्वत्तापत्रयातुरै: ।

सर्वनिर्वेदशमनीं समस्तजननीं नुम: ।।

990 अनुपासित तावकांघ्रिपद्मान्यपरामृष्ट परावर स्थितीनि ।

जगदम्ब वृथैव जीर्यतो मे समतीतानि हि जन्मनां शतानि ।।

991 अपवर्गकथापथातिगाना मनुदासीनहृषीककिङ्कराणां ।

दिवसा बहवो वृथैव याता स्तवसानन्दमुपासनां विना न: ।।

992 अवधीरित साधु सङ्गमाना मपचारेषु च बद्धकङ्कणानां ।

कथमन्यतमं कृपानिधे मां कमले हन्त वृथाकृथा: खलानां ।।

993 स्मारं स्मारं मलिन विषयान्मानसंमेऽवसन्नं

चारंचारं प्रतिखलगृहं जातखेदौच पादौ ।

कारंकारं कुजनविनुतिं क्लेशिताहन्त जिह्वा

वारंवारं वनजनिलये किन्तु विज्ञापयेयं ।।

994 विहितमखिलन्त्यक्त्वा कृत्वाचगर्हितमन्वहं

तदुचितफलान्यत्रामुत्राप्यहोकलयन्नहं ।

गुणगणनिधेमृत्वामृत्वा कियन्ति युगानि वा

मुरविजयिनो जाये जायेयमस्मि भयातुर:

995 तृणत्याजन्त्यक्त्वात्रिजगति कळत्रादिविषयान्

प्रणत्या ते देव्या: कतिकतिगतिं यान्तिकृतिन

अहन्त्वेवंतावद्विषयविषयंत्रेषुपतित:

विषीदन् संसारे विपदवसरे रोदिमि रमे

996 जननि महति वंशे जन्मलब्धं तत: किं ?

विशदमवगते वा वेदशास्त्रे तत: किं

सदसि कथकदर्पस्सादितो वातत: किं ?

भवजलधितरिस्त्वं भाविता चेन्नचित्ते

997 अटित्वादुर्देशान् सदसि च नटित्वाक्षितिभुजां

पठित्वा दीनोक्तीरपि फलमलब्ध्वाऽतिचपल

अपारैर्व्यापारैरलसतनुराराधनमहो

भवत्या हित्वाहं बलवदवसीदामि कमले

998 निरन्तरमरुन्तुदैर्निरयवेदनापादना

दुरासदधराभुजामलमपावनैस्सेवनै:

रमे ननुरमेतमे दुरितमोचके मेचके

घनस्तनिमनस्त्वया घटितनर्मणि ब्रह्मणि।

999 जनितहृदवसादं शुष्कनिर्वेदवादं

जननि जहदवार्यं शश्वदालंब्य धैर्यं

शरणमिहभजेयं संश्रितान्यैरजेयं

दनुजभिदमुदारं तं भवत्या सदारं।

1000 निर्विण्णमब्धिकन्ये निरीक्ष्यमां शीतलैरपाङ्गलवै:।

अभिषिञ्चसि बलिवञ्चक चरणद्वयशरण वरणसाम्राज्ये॥

## 25. शरणागतिस्तबक:

1001 दुग्धां दुग्धांबुधे: पुत्रि दुरितापह्वरा मम।

शार्ङ्गिणश्चरणाम्भोज शरणागतिसम्पदं॥

1002 ध[illegible]मुच्चतरदुर्विषयाटवीषु

सारङ्गशाबमिव शश्वदपाङ्गजालै:।

मामच्युतस्य महिषि प्रसभं गृहीत्वा

नित्यं विधेहि युवयोरनुकूलवृत्तिं॥

1003 मातर्हिताहितविवेक विहीनमेनं

मन्दं मुकुन्दवरवर्णिनि मां जघन्यात्।

मार्गान्निवर्तयितुमर्हसि मंक्षुमाता

कूपे निपित्सुमपि डिम्भमुपेक्षते किं?॥

1004 विश्वस्यधात्रि भवती परिपास्यतीति

विश्वस्य सम्यगभयन्तु वयञ्चराम:।

निश्श्रेयसं गमय वा निरयन्नयेर्वा

कीर्तिं लभस्व यदि वा महतीमकीर्तिं॥

1005 उच्चैरकृत्रिमगिरो यदि नाब्धिघोषा:

उन्मादिनां फणितय: स्मृतयश्च नो चेत्।

नारायणप्रणयिनीं नमतो मम त्वां

नैश्श्रेयसी न भविता कथमम्ब सम्पत्॥

1006 गीतोपदेशगुरुपत्नि कृतागसो मे

गोप्त्री त्वमेव भवताद्भवताप भाज:।

आत्मावनेप्यकुशलैरपरै[illegible]: किं

बद्ध: स्वयं किमु विमोचयिता बतान्यं॥

1007 कर्माहृतिर्मतिरुपास्तिरिति प्रतीतै:

मुक्तो मुरान्तक विलासिनि मुक्त्युपायै:।

अस्मादृशस्तवजगत्यनुकम्पनीय:

नानापराधनिधिरम्ब न लभ्यतेऽन्य

1008 पापोत्थकोप कलुषीकृतनाथचेत:

पाथ: प्रसादनविधौ कतकाचितो

योऽहं भवामि स भवन्यदुनाथयोरे

तान्त्वामनन्यशरणश्शरणं प्रपद्ये

1009 निरतिशयविभूतेर्देवि निष्किञ्चनोऽहं

भवदवपरितमो भास्वरानन्दमू

त्वदुपजनितबोधस्त्वज्जुष: कैटभारे:

चरणनळिनयोर्मां तत्स्वमेवार्पयामि

1010 महति भवतीमामार्याणां कुलेसमजीजनत्

भवपथपरिश्रान्तच्छायातरूननयद्गुरू

शरणवरणं साङ्गं शौरावचीकरदिन्दिरे

किमिह बहुना सम्पूर्णो मे चिरेण मनोरथ:

1011 हृद्यं पद्यसहस्रमेतदनघं संशृण्वत: कम्पतां

मोदेनादिमशाब्दिकस्य फणिनो मूर्ध्नां सहस्रं मुहु

तत्कालोचितचारुमारुतधुतत्वत्केळिगाढश्रमं

प्रत्नं संप्रति मे प्रसीदतु रमे पक्षीन्द्रवाहं मह:

1012 येयन्नाद्रियते कृति: कतिपयै रीर्ष्यागृहीतैर्जनै:

चित्रं सैवविपश्चितामकलुषे चित्ते विधत्ते पदं

विश्वस्याम्ब मनोदुनोति दयिता विश्लेषिणां या नृणां

नो किं कोकिलकाकली भवतिसा तोषाय योषाजुषां

1013 अम्बत्वद्गुणलेशपेशलमिदं डिम्भस्य मे जल्पितं

साकं लोकपतिस्त्वया निशामयन् नाकं विधातु: पदं

मोक्षञ्चाननुरूपमेवगणयन् मोदान्महौदार्यवान्

मन्येसंप्रति पारितोषिक मसा वन्वेषतेऽयं हरि:

शुभमस्तु

## बन्धचित्रम्

### * द्विचतुष्क चक्रबन्धः * (गोमूत्रिकाबन्धः)

901 कमले देवदेवस्य महिषि त्वं स्तुतक्रमे।

विमले देवदेहस्य महितत्वं नतस्य मे ॥



914 मयि ते पदभक्तेऽस्मिन् प्रसीद कमले हिते।

तेजसा दह शक्तेऽद्य क्षिप्रमुग्रमघं मम ॥

### * द्विशृङ्गाटक चक्रबन्धः *



### * द्विचतुष्क चक्रबन्धः *

915 भजेमहि हरेः कान्तां कारुण्यरसपूरितां ।

भवामयहरां कामं कार्पण्यत्रासहारिणीं ॥




916 मावतादत्र परमा मारपस्त्वाक्षिकालिमा ।
मालिकाभिस्समेता मा माता मे विधुतावमा ॥

* चतुररचक्र बन्धः *



* षोडशदळपद्मं *

२१७ - क्षमा समागमा भीमा रमाणाप्रादिमा समा ।

क्षामा क्षेमा रमानामा प्रमासीमासु माति मा ॥



(ग्रन्थान्तरे प्रकारान्तर निवेशनं)



२१९ समुद्रजोन्नतान्कुर्यात्सा नस्संसार तारिका ।

* शरबन्धः *

समुद्रजोन्नितान्क्रौर्यात्पुनस्त्रासान्नि तारिका ॥



* गारुडगात चक्रबन्धः *

१२२ मारमाता हि भात्युग्र रविमाहित भागमा ।

मानिता विधिभीतानां हृतदुर्गात्युरुश्रमा ॥



* कविनामाङ्कित मष्टदळ पद्मं *

१३४ मासारश्मापरस्या वनगगगनवत्याघुणत्स्वाशङ्केमा माहेश स्वास्थ्य नाकादि पददपदित्ये धयन्ती

माताहन्तीति सूते रचिततततचरस्थानुकूल्यावनामा मानावन्या प्रकृष्टं परमममरपप्रीतिरश्मारसामा ॥ [-तामा]



*** कविकाव्यनामाङ्कितं महाचक्रं ***

९३५ वक्रावेक्षितकर्मकुक्षितिभुजां बो सर्वदा यद्दृशां पत्यङ्कस्थितिमत्र विन्दति भयं साहृतुमृज्वर्थिनां।

त्रिक्षाटस्वमलात्म दुर्गतिहराऽजस्रंमता नः परा राजीवाबसथापराधि विदुरा शान्तात्मनां भासुरा॥



## * अष्टारचक्रं *

१३८ आर्तं वेदयमीड्य सार महिमश्रीवत्सगौकस्पृश त्रेताद्रु स्थिरमांतनुत्वममलाप्ता तं गिरिं वीन्द्रपा।

यत्राटानलसप्रतापमचलद्दासेड्रीन्दुस्थले वन्द्यार्यव्रजकल्पकक्रमतया ज्ञानप्रदातासि न ॥



942 नाशित्ता पत्तिना नाकसद्मादिना नादिनेत्राधुना नाथिनीं विष्णुना।
नापचारादिना नामयात्सज्जना नाविनुं मां विना नाश्रयान्याघना ॥

* प्रबन्धविषय नामाङ्कितमष्टदलपद्मं *



## About the Book

**'Lakshmi-Sahasram'** is a classic Sanskrit Kavya composed of 1013 verses in praise of Goddess Mahalakshmi, in terse Sanskrit, replete with excellent grammatical, philosophical, literary and devotional expressions of great thoughts contained in the upanishads, epics & works of Poorvacharyas. The 'Dvaya' Mantra of Sri vaishnavas, consisting of 25 letters, has been expanded into 25 slokas by Sri Vedanta Desika in Sri Stuti. The same has been further elaborated by **Mahakavi Arasanipalai, Venkatadhwari** in this classic, into 25 chapters called 'Stabakas' which amply testify that his mastery in all branches of higher learning viz. Tarka, Vyakarana, Mimasa, Vishistadvaita Vedanta & Alankara is par excellence.

It is said that the author regained his eyesight by composing this work, which was lost purportedly due to a critical remark on Lord Narayana in one of his other works (Vishwa-Guna-Adarsa). Thus, the efficacy of this work in restoring eyesight, upan proper recitation, is believed to be phenomenal.